# वाक्यजिज्ञासा - १०

*(चिन्तनार्हविषययुक्तं वाक्यं, स्थूलाक्षरैः मुद्रितम् उपरि भवति । तस्य अधः तत्सम्बद्धं विवरणं भवति । ततः अन्यत् वाक्यं, पुनः विवरणम् । एवम् अत्र क्रमः ।*

*विवरणसन्दर्भे प्रथमं साररूपेण किञ्चित् उच्यते । अनन्तरं तस्य स्पष्टज्ञानार्थं शास्त्रीयं विवरणम् अपि दीयते । शास्त्रीयविवरणस्य ज्ञाने केचन क्लेशम् अनुभवेयुः । तादृशाः, वाक्येन, वाक्यद्वयेन, वाक्यैः वा प्रथमं दत्तं सारभागं पश्यन्ति चेदपि अलम् । तावता एव 'किं शुद्धम्' इति ज्ञायते । 'किमर्थम् एवम्' इति ये ज्ञातुम् इच्छन्ति तादृशानां कृते अग्रिमं विवरणम् ।)*

**४१. एतत् पुस्तकं मम गृहं प्रेषयतु ।**

❑ **'गृहं प्रेषयतु'** इति प्रयोगे न कोऽपि दोषः । अत्र प्रेषृ-गतौ इति धातुः । एषः धातुः भ्वादौ पठितः । गत्यर्थकत्वं सकर्मकत्वं च एतस्य । 'प्रेषते' इति वर्तमानकालस्य (लटः) प्रथमपुरुषैकवचनस्य रूपम् । तस्य प्रेरणार्थकं णिजन्तं रूपं 'प्रेषयति' इति । गमयति इति अर्थः । प्रेरणार्थकणिच् यदा प्रयुज्यते गृहशब्दस्य कर्मत्वम् आयातम् । पुस्तकशब्दस्य तु कर्मत्वम् अस्ति एव । अतः णिजन्तरूपयुक्ते वाक्ये कर्मद्वयं श्रूयते ।

'पुस्तकं गृहं प्रेषयतु' इत्यत्र गृहशब्दस्य कथं कर्मत्वम् इति प्रश्नः तदा भवति यदा प्रेषृधातुः दशमगणीयः इति भ्रान्तिः भवति । प्रेषृधातुः भ्वादौ पठितः इत्यतः गृहशब्दस्य कर्मत्वे न काऽपि विप्रतिपत्तिः ।

**४२. भवान् एतानि पत्राणि प्रेषयित्वा एव गृहं गच्छतु ।**

❑ **'प्रेषयित्वा'** इति रूपं साधु एव । प्रेषयति इत्यत्र न हि 'प्र' इति उपसर्गः । अपि तु धातुः एव 'प्रेषृ' इति । भ्वादौ एषः धातुः पठितः । तस्य प्रेरणार्थकणिजन्तरूपं प्रेषयति इति । अतः तस्य क्त्वान्तं रूपं प्रेषयित्वा इति । ल्यबन्तं रूपं तु सम्प्रेष्य इति ।

केचन तु एवं प्रतिपादयन्ति - ''प्रेष्य इत्यत्र इच्छार्थकः इषधातुः । 'प्र' इति

उपसर्गेण योगः । यदा धातुः उपसर्गेण युक्तः भवति तदा क्त्वान्तं रूपं न भवति। ल्यप्प्रत्ययः भवति तत्र । अतः प्रेष्य इत्येव प्रयोक्तव्यम्'' इति ।

प्रेषृधातुम् अपरिशीलयता केनचित् एवम् उच्येत । 'प्रेषयित्वा' इत्येतस्य रूपस्य सिद्धिः पूर्वं प्रदर्शिता एव । अतः प्रेषयित्वा इति रूपं न भवति इति तु अप्रामाणिकं वचनम् ।

'प्रेषयित्वा' इत्यस्य यः अर्थः तस्मिन्नेव अर्थे 'प्रेष्य' इति रूपम् अपि प्रयोक्तुं शक्यम् । प्रेष्य इत्यत्र 'प्र' इति उपसर्गेण युक्तः गत्यर्थकः (न तु इच्छार्थकः) दिवादिगणे पठितः इषधातुः । अतः 'प्रेष्य' इति रूपस्य प्रयोगे कृते न दोषः ।

**४३. ताः आरामेण उपविश्य जल्पन्त्यः सन्ति ।**

❑ **'सुखेन उपविश्य'** इति वक्तव्यम् । आरामशब्दः प्रादेशिकभाषासु सुखाद्यर्थं बोधयेत् नाम, किन्तु संस्कृते तु तस्य सुखाद्यर्थकत्वं नास्ति एव । कृत्रिमवनार्थकत्वं तस्य । तथा च कोषः – 'आरामः स्यात् उपवनं कृत्रिमं वनमेव तत्' इति अमरः । 'आरम्यते अत्र' इत्यर्थे घञ्प्रत्ययः । अतः 'सुखेन उपविश्य' इत्येव प्रयोक्तव्यम् ।

बहवः संस्कृतशब्दाः प्रादेशिकभाषासु अर्थान्तरेषु बहुधा प्रयुक्ताः दृश्यन्ते । तासु भाषासु तेषु अर्थेषु तस्य प्रयोगः भवतु कामम् । किन्तु संस्कृते तु तेषु अर्थेषु स च शब्दः प्रयोक्तुं न शक्यः । कोषकारैः ये अर्थाः उक्ताः, प्रामाणिकः प्रयोगः येषु अर्थेषु दृश्यते, तेष्वेव अर्थेषु ते शब्दाः प्रयोक्तव्याः भवन्ति । अविचिन्त्य व्यवहारः संस्कृतक्षेत्रे न शोभते ।

**४४. अहं भवतः गृहे कानिचन दिनानि उषितुम् इच्छामि ।**

❑ 'उषितुम्' इति रूपम् अशुद्धम् । **'वस्तुम्'** इति प्रयोक्तव्यम् । 'उषित्वा' इत्यादीनि सम्प्रसारणयुक्तानि रूपाणि दृष्ट्वा भ्रान्त्या उषितुम् इति प्रयोगः क्रियेत कदाचित् । वसधातोः कितिप्रत्यये परे 'वचिस्वपियजादीनां किति' (६.१.१५) इति सूत्रेण सम्प्रसारणम् । तुमुन्प्रत्ययः न कित् । अतः सम्प्रसारणं नास्ति । तुमुनि इट्प्रत्ययः अपि नास्ति । अतः 'वस्तुम्' इत्येव प्रयोक्तव्यं, न तु उषितुम् इति ।



# चन्दमामा

सप्टम्बर् -१९९६



## अन्तरङ्गम्






प्रतिकृतिमूल्यं रू. ६-००

वार्षिकं ग्राहकशुल्कं रू. ७२-००




# चन्दमामा

संस्थापकः - **'चक्रपाणिः'** सञ्चालकः - **'नागिरेड्डी'**



## बाल्यत्वस्य परिरक्षणम्

गते जून्मासे जेनीवानगरे १८० देशानां श्रमविभागमन्त्रिणः सम्मिलिताः आसन् । तैः निर्णीतं यत् श्रमप्रधानकार्येषु योजनेन बालानां यत् शोषणं प्रचलति तत् स्थगनीयम् इति । एतादृशः निर्णयः तैः किमर्थं कृतः इति कदाचित् प्रश्नः उदियात् अस्माकं मनसि । वस्तुस्थितिः तावत् अस्मासु आश्चर्यम् आतङ्कं च जनयेत् । जागतिकश्रमपरिषत् (ऐ.एल्.ओ.) वदति - १९९५ तमे वर्षे एशियाखण्डे (इण्डोनेशिया-भारतयोः) आफ्रिकाखण्डे (घाना-सेनेगल्देशयोः) च ७,३०,००,००० बालाः - येषां च वयः १० तः न न्यूनं, १४ तः न अधिकं तादृशाः - कार्ये योजिताः इति । जागतिक-परिषदा उच्यते - 'इदानीम् अंशमात्रम् एव ज्ञातम् अस्ति । वस्तुतः तु १०० कोट्यधिकाः बालाः श्रमकार्ये नियोजिताः स्युः एव' इति ।

एतेषु २५% बालाः श्रमेण अर्जितं धनं मातापित्रोः कृते, आश्रयदातॄणां कृते वा यच्छन्ति इति श्रूयते । एतस्मात् स्पष्टं यत् कुटुम्बस्य आर्थिककष्टस्य निर्वहणभारः अपि तैः वोढव्यः भवति इति । एतया समस्यया पीड्यमानाः देशाः इतः कथं विमोचनं प्राप्नुयुः इति तु प्रतीक्षणीयम् ।

एतस्मिन् काले भारतीयौद्योगिकक्षेत्रतः कश्चन आशाकिरणः उदितः दृश्यते । येषु क्षेत्रेषु बालाः आधिक्येन नियुक्ताः दृश्यन्ते, तत्र तेषां बालानां कुटुम्बस्य आयस्य वर्धनार्थम् उपायः चिन्त्यमानः अस्ति । कुटुम्बस्य आयः प्रवृद्धः चेत् ते बालाः अध्ययने क्रीडादिषु वा किञ्चित् वा मनः प्रवर्तयितुम् अवकाशं प्राप्नुयुः ।

'इण्डियन् चेम्बर्स् आफ् कामर्स् एण्ड् इण्डस्ट्री'नामिकायाः संस्थायाः अध्यक्षः मद्रास्नगरे उक्तवान् अस्ति - 'आर्थिकदृष्ट्या अतिदुर्बलानां स्त्रीणाम् उद्धारार्थं यत्नः एव अस्माकम् अग्रिमं पदम्' इति । उद्योगे दुर्बलमहिलानां नियोजनम् इत्येतत् श्लाघनीयं पदम् अस्ति ।

दूरदर्शने पौनःपुन्येन प्रदर्श्यमानं वाक्यं सदा स्मर्तव्यम् अस्माभिः । तच्च अस्ति - 'बालाः स्वस्य बाल्यस्य सुखम् अनुभवन्तु नाम, यतः तैः अपि तत् जीवने एकवारम् एव प्राप्यते' इति ।

सम्पुटः - १३ सप्टम्बर् - १९९६ सञ्चिका - ६

प्रतिकृतिमूल्यं रू. ६-०० * वार्षिकं ग्राहकशुल्कं रू. ७२-००



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | |
|---|---|---|
| अधःपतनम् | - | Downfall |
| अन्तःपेटिका | - | Drawer |
| अभिलक्ष्य | - | Concerning |
| अहितम् | - | Evil |
| आक्रन्दनम् | - | Cry |
| आद्यता | - | Priority |
| उच्छ्रायस्थितिः | - | At the height of one's success |
| उपस्थाय | - | Being present |
| उभयतः | - | Both sides |
| उरःस्थलम् | - | Chest |
| उलूकः | - | Owl |
| उष्णीषम् | - | Turban |
| कपालः | - | Skull |
| कांस्यम् | - | Brass |
| क्षामः | - | Famine |
| गभीरता | - | Seriousness of the situation |
| चरणम् | - | Grazing |
| तरलम् | - | Fickle |
| तुला | - | Balance |
| दैन्यम् | - | Humility |
| नियुक्तिः | - | Appointment |
| निश्चेतुम् | - | To fix up |
| निष्कृष्टतया | - | Currectly |
| पिपीलिका | - | Ant |
| प्रकृतम् | - | Now |
| प्रवृत्तम् | - | Happened |
| बाहुल्येन | - | Plentifully |
| मुसलः | - | A large pestle |
| मृत्तिका | - | Soil |
| यथास्थितम् | - | As it is |
| विस्तरः | - | Length |
| वृतिः | - | Fence |
| वृन्तम् | - | Stalk |
| वेणी | - | Braid of Hair |
| व्याकुलः | - | Agitated |
| शपथग्रहणम् | - | Oath |
| सन्तुष्टः | - | Happy |
| समाहूतः | - | Invited |

वार्ताविशेषः

# नूतनः प्रधानमन्त्री

गतयोः एप्रिल्-मे-मासयोः लोकसभायाः ५४३ स्थानानां निमित्तम्, अस्सां, हरियाणा, केरलम्, तमिळनाडु, पश्चिमबङ्गाल्, पाण्डिच्चेरी (केन्द्रशासितप्रदेशः) इत्येषां राज्यानां विधानसभीयानां ९१४ स्थानानां निमित्तं च निर्वाचनं प्रवृत्तम्। काभ्यश्चित् लघुघटनाभ्यः ऋते सर्वत्र प्रशान्तरीत्या एव निर्वाचनं प्रवृत्तम् । चतुर्षु राज्येषु पाण्डिच्चेरि प्रदेशे च अधिकारस्थाः पक्षाः पराजयं प्राप्तवन्तः ।



पश्चिमबङ्गालराज्यमात्रे अधिकारस्थः साम्यवादिपक्षः एव पुनरपि अधिकारम् अगृह्णात् ।

केन्द्रे अपि शासकपक्ष-परिवर्तनं जातम् । शासकपक्षेण कांग्रेस्दलेन १४० स्थानानि प्राप्तानि । भारतीयजनतापक्षेण तावत् १६१ स्थानानि प्राप्तानि । तथापि शासनव्यवहारं निर्वोढुम् अपेक्षितं स्थानबलं तु केनापि पक्षेण न प्राप्तम् ।

लोकसभानिर्वाचने जनतादलेन ४६ स्थानानि, साम्यवादिदलाभ्यां ४४ स्थानानि, १७ प्रादेशिकपक्षैः, स्वतन्त्राभ्यर्थिभिः च सम्भूय १५३ स्थानानि च प्राप्तानि । केचन प्रादेशिकपक्षाः भारतीयजनतादलस्य साहाय्यम् उद्घोषितवन्तः इत्यतः राष्ट्रपतिना तत्पक्षनायकः अटलबिहारीवाजपेयी मन्त्रिमण्डलरचनार्थं समाहूतः । मेमासस्य १५ दिनाङ्के तेन पक्षेण सर्वकारः आरचितः । किन्तु सूचिते अवधौ तेन पक्षेण बहुमतसमर्थनं कर्तुं न शक्तम् इत्यतः १३ दिनाभ्यन्तरे एव त्यागपत्रं समर्पितम् ।

ततः सर्वकाररचनाभारः जनतादल-साम्यवादिपक्षादीनाम् उपरि आपतितः । तैः संयुक्तरङ्गस्य रचना कृता । जनतादलेन कर्णाटकराज्यस्य मुख्यमन्त्री श्री एच्.डि. देवेगौडः स्वनायकत्वेन चितः इत्यतः सः एव अस्मद्देशस्य १२ प्रधानमन्त्रित्वेन जून्मासस्य प्रथमे दिनाङ्के शपथग्रहणं कृतवान्। द्वादशपक्षात्मकस्य रङ्गस्य नायकत्वं तेन निरूढम् । श्री देवेगौडवर्यः १९३३तमे वर्षे कस्मिंश्चित् कुग्रामे कृषिककुले जातः । सिविल् इञ्जनियरिङ्ग् डिप्लोमापदवीं प्राप्य सः कानिचन वर्षाणि यावत् सिविल्कण्ट्राक्टर्-रूपेण कार्यम् अपि कृतवान् आसीत् ।

ततः राजकीयक्षेत्रे अभिवृद्धिं प्राप्नुवन् १९६२तमे वर्षे कर्णाटके यदा ऐदम्प्राथम्येन कांग्रेसेतरपक्षेण सर्वकारः रचितः तदा एषः मन्त्रित्वं प्राप्तवान् । १९९१तमे वर्षे समाजवादिपक्षस्य अभ्यर्थित्वेन सः हासन-क्षेत्रतः लोकसभासदस्यत्वेन चितः अभवत् । १९९४तमे वर्षे प्रवृत्ते निर्वाचने जनतादलस्य नायकत्वं निर्वहन् कर्णाटकराज्यस्य मुख्यमन्त्रित्वं प्राप्तवान् एषः १७ मासान् यावत् तत् पदं निरुह्य प्रकृतं संयुक्तरङ्गस्य आदेशं शिरसा वहन् भारतस्य प्रधानमन्त्रिस्थानम् अलङ्कृतवान् अस्ति ।



# विश्वनाथस्य चिन्तनम्

मङ्गलगिरिनामके कस्मिंश्चित् ग्रामे गोविन्दः नाम भूस्वामी आसीत्। तस्य बृहत् गृहं, प्रभूता कृषिभूमिः चापि आसीत्। दैवानुग्रहात् सर्वेषु अपि कार्येषु तस्य साफल्यं निश्चितम् आसीत्। अतः जनाः वदन्ति स्म यत् गोविन्दः भाग्यशाली इति।

अथ कदाचित् गोपालः नाम कश्चित् तं ग्रामम् आगतवान्। सः धनिकः न चेदपि महाबुद्धिमान् आसीत्। आगमनस्य अनन्तरं दशदिनाभ्यन्तरे एव सः सर्वेषां ग्रामजनानाम् आदरं स्नेहं च प्राप्तवान्। किन्तु गोविन्द-गोपालयोः मेलनं तु कदापि न जातम् आसीत्।

गोविन्दः ग्रामीणानां मुखतः तदा तदा गोपालस्य वार्तां श्रृणोति स्म। 'मम ग्रामम् आगत्य जनप्रियतां सम्पादयन् एषः गोपालः मया अवश्यं द्रष्टव्यः' इति विचिन्त्य गोविन्दः कदाचित् सेवकद्वारा गोपालम् आनायितवान्।

''कदाचित् अत्र आगन्तव्यम् इति अहम् अपि चिन्तयन् आसम्। अत्रान्तरे भवान् एव माम् आहूतवान्। मम आह्वानस्य कारणं किम् ?'' इति पृष्टवान् गोपालः।

''भवान् बहु कष्टे अस्ति इति अहं ज्ञातवान्। आत्माभिमानिनः कदाऽपि किमपि न वदन्ति। अभिमानकारणतः भवान् मम साहाय्यं प्रार्थितवान् न स्यात्। आत्मीयताम् इच्छन् अहम् एव भवतः साहाय्यं करोमि इति चिन्तितवान् अस्मि'' इति उक्तवान् गोविन्दः।

तदा गोपालः तं नमस्कुर्वन् उक्तवान् - ''आत्मीयतया सम्भाषणं कृतवान् भवान्। तेन एव अहं नितरां सन्तुष्टः अस्मि। गोविन्दवर्य ! स्वसामर्थ्यबलात् एव अहं श्रेष्ठः भवितुम् इच्छामि। कस्यापि साहाय्यं धनं वा इदानीं मह्यं न अवश्यकम्। अतः भवत्तः धनम् इदानीं न स्वीकरोमि। एतत्कारणतः अन्यथाचिन्तनम् अकृत्वा

मयि आत्मीयता प्रदर्शनीया इति प्रार्थये'' इति ।

''अस्तु'' इति उक्तवान् गोविन्दः ।

गोपालः परिवारेण सह भाटकगृहे वासं करोति स्म । वर्षद्वयानन्तरं सः एकं स्वगृहं निर्मापितवान् । पुनः वर्षद्वयाभ्यन्तरे पञ्च-एकर-परिमितां भूमिं क्रीतवान् । क्रमशः अधिकं धनम् अपि सम्पादितवान् सः । दशवर्षाभ्यन्तरे एव, गोविन्दः यादृशः धनिकः अस्ति तादृशः एव धनिकः अभवत् गोपालः ।

गोपालः सर्वविधसन्तोषवार्ताः अपि सर्वदा गोविन्दं वदति स्म । परन्तु गोविन्दः सर्वं श्रुत्वा अपि किञ्चिदपि सन्तोषं न प्रकटयति स्म ।

गच्छता कालेन गोपालः दूरप्रदेशान् गत्वा पण्डितगोष्ठ्यां भागग्रहणम् आरब्ध-वान् । पण्डितगोष्ठ्याः आयोजकाः उपायनरूपेण प्रभूतं धनं यच्छन्ति स्म । एतस्मात् गोपालस्य आयः वर्धते स्म । परन्तु गोविन्दः एतत् असहमानः गोपालस्य निन्दनं करोति स्म ।

अथ कदाचित् मङ्गलगिरिग्रामं प्रति कश्चन राजदूतः आगतवान् । ''अस्माकं देशस्य महाराजेन चिन्तितम् अस्ति यत् महापण्डितस्य गोपालवर्यस्य सम्माननं करणीयम् इति । सप्ताहाभ्यन्तरे सुवर्णस्य शिबिकायाम् उपवेश्य गोपालं नेतुं भटाः आगमिष्यन्ति'' इति वार्तां सर्वत्र प्रसार्य गतवान् सः राजदूतः ।

एषा वार्ता ग्रामजनानां वार्तालापविषयः जातः । ते सर्वे सम्भूय ग्रामे गोपालस्य सम्माननं कृतवन्तः ।



गोपालः एतां शुभवार्तां गोविन्दम् उक्तवान् । परन्तु गोविन्दः एतत् श्रुत्वा अपि सन्तोषम् अप्रकटयन् - ''मम महती-शिरोवेदना'' इति वदन् प्रकोष्ठस्य अन्तः गतवान् ।

एतं व्यवहारं दृष्टवतः गोपालस्य आश्चर्यम् अभवत् । ''अहो, स्वभावो दुरतिक्रमः'' इति स्वगतं वदन् सः ततः निर्गतवान् ।

ततः सप्ताहाभ्यन्तरे राजधानीतः सुवर्णशिबिका आगता । ग्रामस्य जनाः गोपालं सुवर्णशिबिकायाम् उपावेश्य ग्राम-सीमापर्यन्तं प्रापय्य आगतवन्तः । गोविन्दः अस्वास्थ्यव्याजं वदन् अत्र भागं न गृहीतवान् ।

राजधान्यां महता वैभवेन गोपालस्य सम्माननं प्रवृत्तम् । महाराजः तेन सह वार्तालापं कुर्वन् - ''पण्डितोत्तम !



मङ्गलगिरिग्रामे ग्रामाधिकारी कोऽपि नास्ति । पार्श्वग्रामस्य ग्रामाधिकारी एव द्वयोः अपि ग्रामयोः व्यवहारं निर्वहन् अस्ति । अतः इतःपरं भवान् एव मङ्गलगिरिग्रामस्य ग्रामाधिकारी भवतु'' इति उक्तवान् ।

महाराजस्य वचनं श्रुत्वा गोपालः अनङ्गीकारं प्रकटयन् - ''महाप्रभो ! पाण्डित्यम् अन्यत् । ग्रामव्यवहारनिर्वहणम् अन्यत् । मङ्गलगिरिग्रामे मम उत्तमः स्नेहितः अस्ति । यदि सः ग्रामाधिकारी क्रियेत तर्हि तत्रत्याः प्रजाः सुखेन जीवनं यापयेयुः इति भाति मम'' इति उक्तवान् ।

महाराजः एतं प्रस्तावम् अङ्गीकुर्वन् अचिरात् एव पत्रद्वारा घोषितवान् यत् गोविन्दः एव ग्रामाधिकारी इति । प्रवृत्तं सर्वं ज्ञात्वा जनाः गोपालस्य निःस्वार्थतां श्लाघितवन्तः ।

गोपालः राजधानीतः आगत्य गोविन्दसमीपं गत्वा - ''मम मित्रं भवान् ग्रामाधिकारी यत् अभवत्, तत् महते सन्तोषाय जातम्'' इति उक्तवान् । तदा गोविन्दः इदम्प्रथमतया कृतज्ञतां सूचितवान् ।

गोपालस्य पाण्डित्ये महाराजस्य आसक्तिः दिने दिने प्रवृद्धा । महाराजः तदा तदा गोपालं राजधानीं प्रति आह्वयति स्म । यदा गोपालः राजधानीं गच्छति स्म, तदा ग्रामस्थानां समस्याः महाराजं वदति स्म । महाराजः तासां समस्यानां परिहारं सूचयति स्म ।

यदा गोपालः ग्रामं गत्वा गोविन्दम् एतां वार्ताम् उक्तवान्, तदा गोविन्दः कोपेन - ''ग्रामस्य समस्याः महाराजं किमर्थं वदति भवान् ? एतस्य ग्रामस्य अधिकारी अहं, न तु भवान् । अतः इतःपरं भवता कदापि एतादृशं कार्यं न करणीयम्'' इति उक्तवान् ।

''ग्रामस्य हितं सर्वप्रधानम् । तत् कस्य द्वारा सिद्धम् इति तु गौणं भवति । ग्रामहितं सिद्धं दृष्ट्वा ग्रामाधिकारिणा भवता सन्तोषः अनुभवितव्यः, न तु खेदः । महाराजतः यदि भवतः किमपि कार्यं स्यात् तत् भवान् अपि मद्द्वारा कारयतु । तेन भवतः श्रमः न्यूनः भवेत्'' इति गोविन्दम् उक्तवान् गोपालः ।

परन्तु गोविन्दः एतं प्रस्तावं निराकुर्वन् - ''अहम् अस्मि एतस्य ग्रामस्य अधिकारी । ग्रामस्य हिताहितम् अहमेव पश्यामि । भवान् महाराजस्य पुरतः स्वपाण्डित्यमात्रम् उपस्थापयतु, न तु अन्यत् किमपि । एषा

मम आज्ञा'' इति उक्तवान् ।

'पदवीकारणतः गोविन्दस्य अहङ्कारः आगतः अस्ति । तथाऽपि तस्य वचने सत्यांशः तु अस्ति' इति चिन्तितवान् गोपालः ।

गच्छता कालेन गोविन्दस्य मनसि गोपालविषये असहना उद्भूता । अतः सः 'सुयोग्यः करः न दत्तः' इति, 'गृहस्य अङ्गणं मार्गपर्यन्तम् आगतम्' इति वा वदन् अन्यानि क्षुल्लककारणानि वा पुरस्कृत्य गोपालं पीडयितुम् उद्युक्तः अभवत् ।

गोपालः अपि किञ्चित्कालं यावत् एतत्सर्वं सोढवान् । किन्तु अन्ते यदा एषा पीडा पराकाष्ठां गता तदा सः राजानं सर्वं निवेदितवान् । सर्वं ज्ञात्वा महाराजः गोविन्दं यथायोग्यं दण्डितवान् ।

तथाऽपि गोविन्दः स्वस्य भावपरिवर्तने मतिं न कृतवान् । प्रत्युत गोपालस्य विषये इतोऽपि अधिकाम् ईर्ष्यां द्वेषं च कर्तुम् उद्युक्तः अभवत् ।

एतादृश्यां स्थितौ एकदा मङ्गलगिरिग्रामं विश्वनाथः नाम कश्चन संन्यासी आगतवान् । सः बहुभ्यः वर्षेभ्यः हिमालये तपः कृत्वा काश्चन शक्तीः सम्पादितवान् आसीत् । सप्ताहे एकवारं जनाः किमपि याचन्ते चेत् तत् ददाति स्म सः । गोविन्दः स्वस्य गृहे तस्मै आश्रयं दत्तवान् । प्रतिदिनं ग्रामस्थाः आगत्य विश्वनाथस्य दर्शनं कृत्वा स्वसमस्याः निवेदयन्ति स्म ।

ते यत् वदन्ति तत् श्रद्धया श्रुत्वा, तेषु चितानां केषाञ्चित् इच्छां पूरयति स्म विश्वनाथः । गोविन्दस्य गृहे तस्य वासः आसीत् इति कारणतः सर्वदा गोविन्दस्य अपेक्षायाः पूरणे तु विशेषासक्तिं प्रदर्शयति स्म सः ।

एतस्य अवकाशस्य उपयोगं स्वीकर्तुम् इच्छन् गोविन्दः - ''महाराजस्य अभिमानः मयि अधिकः भवतु । मम वचनं महाराजः यथास्थितम् अङ्गीकरोतु'' इति प्रार्थनां कृतवान् । तदनुगुणमेव प्रवृत्तम् अपि ।





एतावता अपि तृप्तिम् अप्राप्नुवन् गोविन्दः उपायेन गोपालस्य हानिं सम्पादयितुम् इच्छन् वार्तालापमध्ये कदाचित् - ''समाजे पण्डितानाम् आवश्यकता अल्पा। सामान्यजनानाम् आवश्यकता अधिका । अतः भवान् किञ्चित्कालं यावत् पण्डितेषु आदरप्रदर्शनं त्यक्त्वा प्रजानां योगक्षेमम् आधिक्येन पश्यति चेत् वरम्'' इति महाराजम् उक्तवान् ।

एतेन कारणेन महाराजः पण्डितेभ्यः पारितोषिकदानं न्यूनीकृतवान् । अतः अन्यपण्डितानाम् इव गोपालस्य अपि आयः न्यूनः जातः । गोपालः स्वभावतः दानशीलः आसीत् । सः वैभवेन जीवनं यापयन् निर्धनानां विशेषसाहाय्यं करोति स्म । महाराजस्य पारितोषिकं यदा स्थगितम् अभवत् तदा एतस्य सम्पत्तिः अपि न्यूना अभवत् ।

केचन जनाः तस्य परिस्थितिं दृष्ट्वा दुःखम् अनुभूतवन्तः । ते उक्तवन्तः - ''भवान् विश्वनाथवर्यं प्रार्थयतु । भवता पुनः महाराजस्य आदरः प्राप्येत'' इति ।

विश्वनाथस्य शक्तेः विषयम् अन्येषां द्वारा श्रुतवान् आसीत् गोपालः । परन्तु अपूर्वशक्तौ तस्य विश्वासः न आसीत् । अतः सः स्वस्य कष्टं महाराजम् एव निवेदयितुम् इच्छन् राजधानीं प्रति प्रस्थितवान् । परन्तु तावति काले गोविन्दस्य वचनानां प्रभावः महाराजे विशेषतः जातः आसीत् ।

''मङ्गलगिरिग्रामस्य जनैः गोविन्दवर्यस्य द्वारा एव समस्या निवेदनीया इति राजाज्ञा अस्ति'' इति राजभटाः उक्तवन्तः । किं करणीयम् इति अजानन् गोपालः मन्त्रिणा मिलितवान् । गोपालस्य पाण्डित्यं दृष्ट्वा नितरां सन्तुष्टः मन्त्री - ''आर्य ! भवतः कृते मया किं करणीयम् ? भवान् यत् वदति तत् अहं कर्तुं सिद्धः अस्मि'' इति उक्तवान् ।

तदा गोपालः एकं सन्देशं लिखित्वा - ''एतत् मया लिखितम् इति महाराजः न वक्तव्यः । पण्डितानां द्वारा सामान्यजनानां कियान् लाभः अस्ति इति, पण्डितानाम् आवश्यकतायाः पूरणेन किं प्रयोजनम् इति च अस्मिन् पत्रे लिखितम् अस्ति । ममैव अभिप्रायः एषः इति वदन् भवान् महाराजम् एवं सन्देशं वदतु'' इति उक्त्वा ततः स्वग्रामं गतवान् ।

यदा मन्त्री उक्तवान् तदा महाराजस्य ज्ञानोदयः अभवत् । प्रत्येकस्मिन् ग्रामे अपि

एकैकः राजपण्डितः नियोजनीयः इति चिन्तयित्वा – "पण्डिताः राजपण्डितस्थान प्राप्त्यर्थं स्वविवरणं प्रेषयितुम् अर्हन्ति । ग्रामाधिकारिणः द्वारा ये विवरणं प्रेषयन्ति तेषाम् आद्यता परिगण्यते नियुक्तिसमये" इति उद्घोषणं कारितवान् ।

मङ्गलगिरिं प्रति एषा वार्ता गता । तत्क्षणे एव गोविन्दः एकं चित्वा तदीयं विवरणं प्रेषितवान् । एतत् ज्ञात्वा गोपालः स्वयमेव महाराजाय विवरणं प्रेषितवान् ।

"महाराजाय भवान् पूर्वं विशेषतः रोचते स्म । परन्तु सः पण्डितानां चयनसमये अपि भवतः अभिप्रायं न पृष्टवान् । एतस्मात् स्पष्टं यत् काचित् दुष्टशक्तिः भवन्तं पीडयन्ती अस्ति इति । अतः एतस्याः समस्यायाः परिहारार्थं भवता विश्वनाथः द्रष्टव्यः" इति केचन जनाः गोपालम् उक्तवन्तः ।

क्षणकालं विचिन्त्य मनसि किमपि निश्चित्य गोपालः विश्वनाथवर्यसमीपं गत्वा स्वस्य समस्यां निवेदितवान् ।

विश्वनाथवर्यः यावत् किमपि वक्तुम् उद्युक्तः, तावता तत्रैव स्थितः गोविन्दः – "स्वामिन् ! एषः भवति न विश्वसिति । अद्यावधि एषः एकवारम् अपि भवतः दर्शनार्थं न आगतवान् इत्येतत् एव अत्र प्रमाणम् । इदानीं स्वार्थसाधनार्थम् अत्र आगतवान् अस्ति एषः" इति उक्तवान् ।

"सर्वे मम समीपं स्वार्थसाधनार्थम् एव आगच्छन्ति । परन्तु यत्र परार्थसिद्धेः अपि प्राधान्यं भवति तादृशस्वार्थम् अहं पुरस्करोमि । भोजने लवणम् इव मनुष्यजीवने अपि स्वार्थः अल्पप्रमाणेन



भवेत् एव । परन्तु कदापि स्वार्थः अधिकः न भवेत् । अहं व्यक्तिं दृष्ट्वा समस्यायाः निवारणं न करोमि । न्यायोचिताः अपेक्षाः अवश्यं पूरयामि एव । एषः मम धर्मः" इति उक्त्वा गोपालम् उद्दिश्य – "वत्स ! श्वः भवान् मम समीपम् आगच्छतु" इति विश्वनाथः गम्भीरस्वरेण उक्तवान् ।

एतत् श्रुत्वा गोविन्दः व्याकुलः अभवत् । 'इदानीमेव गोपालः मां तिरस्कुर्वन् अस्ति । यदि सः राजपण्डितः भविष्यति तर्हि मां तृणसमानं भावयेत् । विश्वनाथस्य आशीर्वादः अवितथः न भवति कदापि । अतः एतद्विषये मया शीघ्रमेव किमपि करणीयम्' इति चिन्तितवान् सः ।

गोपालस्य आशीर्वादस्य दिनम् आगतम् । तस्मिन् दिने विश्वनाथः गोपालं– "वत्स ! यत् आवश्यकं तत् मनसि

प्रार्थयतु'' इति उक्तवान् ।

तदा गोपालः - ''राजपण्डितपदवी आवश्यकी'' इति प्रार्थितवान् ।

किञ्चित्कालानन्तरं गोविन्दः विश्वनाथ-समीपम् आगत्य - ''गोपालेन राजपण्डित-पदवी न प्राप्तव्या'' इति प्रार्थितवान् । अनन्तरं तस्य मनसि कश्चन सन्देहः आगतः । सः विश्वनाथं पृष्टवान् - ''स्वामिन्, एकस्मिन् दिने एव उभाभ्यां परस्परं विरुद्धा अपेक्षा प्रार्थिता चेत् कस्य अपेक्षा सिद्धा भविष्यति ?'' इति पृष्टवान् ।

''यस्य अपेक्षा न्याय्या भवति तस्य अपेक्षा पूर्णा भवति । तस्मात् दिनात् अपरस्य पतनस्य आरम्भः भविष्यति च'' इति उक्तवान् विश्वनाथवर्यः ।

विश्वनाथस्य वचनं श्रुत्वा 'गोपालस्य पतनं भविष्यति' इति चिन्तयन् सन्तोषम् अनुभूतवान् गोविन्दः । किन्तु सप्ताहाभ्यन्तरे एव गोपालेन राजपण्डित-पदवी प्राप्ता । एतां वार्तां श्रुत्वा गोविन्दः आश्चर्यचकितः अभवत् ।

ततः सः विश्वनाथस्य समीपं गत्वा - ''स्वामिन् ! इतः पूर्वं मम भाग्यं कदाऽपि विपरीतं न जातम् आसीत् । भवान् मम गृहे अस्ति इति कारणतः मम सैभाग्यं वर्धेत इति चिन्तितवान् आसम् । परन्तु इदानीं मम पतनम् आरब्धम् अस्ति । श्रीमन्, एवं कथम् अभवत् ?'' इति पृच्छन् रोदनं कृतवान् ।

तदा विश्वनाथः हसन् - ''भवान् यावत् स्वसुखमात्रं चिन्तयन् आसीत् तावत् सर्वं सिद्धं भवति स्म । किन्तु भवान् यदा अन्यस्य अहितस्य चिन्तनम् आरब्धवान् तदा भवतः पतनम् आरब्धम् । गोपालः स्वहितार्थं मां प्रार्थितवान् । भवान् कस्यापि हितम् अनिच्छन् गोपालस्य अहितं प्रार्थितवान् । एतदेव भवतः अधःपतनस्य मूलं कारणम् । कदापि अन्येषां हानिः न चिन्तनीया । आदौ भवान् स्वव्यवहारे यथायोग्यं परिवर्तनम् आनयतु । तेन भवतः अपि उन्नतिः भविष्यति'' इति उक्तवान् ।

तदा गोविन्दस्य ज्ञानोदयः अभवत् । तदारभ्य सः स्वस्य दुःस्वभावं परित्यज्य गोपालेन सह स्नेहेन व्यवहरन् तृप्त्या जीवनं यापितवान् ।






# १३

[रूपधरः प्रयाणकाले मृतः स्यात् इति चिन्तयित्वा केचन दुष्टाः राजकुमाराः तदीये गृहे एव वसन्तः दौष्ट्यम् आचरन्तः - 'अस्मासु कश्चित् भवत्या परिणेतव्यः एव' इति वदन्त रूपधरपत्नीं पीडयन्तः आसन्। रूपधरस्य पुत्रः धीरमतिः पितुः वार्ता ज्ञातुम् इच्छन् नवद्योतेन प्रतापेन च मिलितवान्। तदनन्तरम् ....]

इथाकानगरे रूपधरस्य गृहे स्थिताः दुष्टाः युवकाः स्वेच्छया खादन्तः, स्वच्छन्दं व्यवहरन्तः द्यूतादिना कालं यापयन्ति स्म। धीरमतिः पैलासं प्रति गतः अस्ति इत्येतां वार्ता न जानन्ति स्म ते।

कदाचित् द्यूते मग्नानाम् एतेषां समीपम् आगत्य कश्चन युवकः उक्तवान् - "आर्याः, धीरमतिः पैलासतः कदा प्रत्यागमिष्यति इति किं भवन्तः जानन्ति ? सः मम महानौकां नीतवान् अस्ति। इदानीं मम उपयोगार्थं सा नौका आवश्यकी अस्ति। मया द्वीपान्तरं गत्वा उत्तमाः केचन अश्वाः आनेतव्याः सन्ति" इति।

एतत् श्रुत्वा ते राजकुमाराः आश्चर्यम् अनुभवन्तः परस्परं मुखं दृष्टवन्तः। तेषु अन्यतमः दुर्बुद्धिनामकः तं युवकं पृष्टवान्- "धीरमतिः पैलासं गतवान् अस्ति ? भवान् यथा न जानीयात् तथा सः भवतः



महानौकां नीतवान्, उत भवतः अनुज्ञां प्राप्य एव नीतवान् ? तेन नीतायाः महानौकायाः नाविकाः के ? धीरमतिः कस्य कार्यस्य निमित्तं पैलासं गतवान् अस्ति ? कदा तस्य प्रत्यागमनं सम्भवेत् ?'' इति ।

''मम अनुमतिं प्राप्य एव मदीयां महानौकां नीतवान् अस्ति सः । प्रमुखः सः यदा पृष्टवान् तदा निराकर्तुं न शक्तवान् अहम् । अतः मया ससन्तोषम् एव नौका दत्ता । ग्रामीणाः दृढकायाः केचन युवकाः नाविकत्वेन गताः सन्ति । सहनः तेषां नायकः अस्ति'' इति उक्तवान् सः युवकः ।

एतत् श्रुत्वा नितरां क्रुद्धः दुर्बुद्धिः सहचरान् उद्दिश्य - ''मित्राणि ! सर्वथा वञ्चनाकृत्यम् एतत् । अस्मान् उपायेन वञ्चयित्वा सः समर्थैः नाविकैः सह प्रयाणं कृतवान् अस्ति । अचिरात् एव दण्डनीयः सः । भवन्तः शीघ्रातिशीघ्रं शरवेगेन गमनार्थम् अर्हाः नौकाः सज्जीकारयन्तु । धीरमतिं नाममात्रावशिष्टं करवाम वयम्'' इति उद्वेगेन उक्तवान् ।

अनन्तरं तैः समालोच्य निर्णीतं यत् धीरमतिः पैलासतः यदा प्रत्यागच्छन् भवति तदा तस्य संहारः करणीयः इति । किन्तु तेषाम् एषा योजना सेवकानां द्वारा पद्ममुख्या कथमपि ज्ञाता । ततः पूर्वं तु तया न ज्ञातम् एव आसीत् यत् धीरमतिः समुद्रप्रयाणार्थं निर्गतः अस्ति इति ।

'यदि अहं पूर्वम् एव एतत् ज्ञातवती स्यां तर्हि कथमपि तम् एतस्मात् प्रयत्नात् निवारितवती स्याम्' इति स्वगतं वदन्ती पद्ममुखी अश्रूणि स्रावितवती ।

''अस्माकं परिणयम् अनिच्छन्ती एषा रुदती अस्ति इति भाति । किन्तु वराकी एषा न जानाति यत् अचिरात् एव पुत्रवियोगः भविष्यति इति'' इति उक्तवान् कश्चन दुष्टः राजकुमारः ।

''भवन्तः धीरमतेः संहारयोजनाविषयं कदापि कमपि मा वदन्तु । एषा योजना लेशमात्रेण अपि केनापि ज्ञाता न भवेत्'' इति अनुचरान् सूचितवान् दुर्बुद्धिः ।

ततः विंशतिं समर्थनाविकान् सङ्गृह्य तैः सह समुद्रतीरं गतवान् सः । नौकायां खड्ग-शूल-कुन्तादीनि आयुधानि आरोपितानि । नौका प्रयाणार्थं सज्जीकृता ।

पुत्रप्रवासवार्तां, पुत्रहननार्थं दुष्टैः कृतायाः योजनायाः वार्तां च श्रुतवत्यै पद्ममुख्यै आहारः एव न अरोचत । 'मया अचिरात् पुत्रस्य प्रत्यागमनं दृश्येत उत तदीयं शवं दृश्येत' इति चिन्तयन्ती सा

नितरां खिन्ना जाता ।

अत्रान्तरे तस्याः सहोदर्याः आकारः तस्याः पुरतः दृष्टिगोचरः जातः । स च आकारः- ''भगिनि ! अलं दुःखेन चिन्तया वा । भवत्याः पुत्रस्य कोऽपि अपायः न भविष्यति'' इति उक्त्वा अदृश्यतां गतः ।

रात्रौ इथाकातीरतः प्रस्थिताः ते दुष्टाः नौकां कस्यचित् शिलामयद्वीपस्य समीपे स्थगयित्वा धीरमतेः प्रत्यागमनम् एव प्रतीक्षमाणाः स्थितवन्तः ।

धीरमतिः तावत् प्रतापस्य अनुज्ञां प्राप्य प्रतापेन दत्तानि बहुविधानि उपायनानि स्वीकृत्य प्रतिप्रयाणम् आरब्धवान् । तीरम् आगतः सः बलिसम्बद्धनौकायाम् उपविश्य प्रयाणं कृतवान् । तस्य प्रयाणं स्वनगरं प्रति न आसीत् । प्रत्युत अन्यत् स्थलं प्रति आसीत् । उद्दिष्टं स्थलं प्राप्य सः नौकातः अवतीर्य - ''भवन्तः नगरं प्रतिगच्छन्तु । अहं वराहपालकेन सम्भाष्य द्वित्राणां दिनानाम् अनन्तरं नगरं प्रति आगमिष्यामि'' इति सूचितवान् ।

यदा धीरमतिः वराहपालकस्य कुटीरं प्राप्तवान् तदा सः - वराहपालकः, वृद्धवेषीयः रूपधरश्च पाककार्ये मग्नौ आस्ताम् । कुटीरस्य पुरतः स्थिताः शुनकाः धीरमतिम् अभिज्ञाय पुच्छचालनेन सन्तोषं प्रकटयन्तः पादद्वयेन तं गृह्णन्तः स्नेहं प्रकटितवन्तः ।

''कोऽपि आगतः अस्ति इति भाति । किन्तु सः आत्मीयः ज्ञातपूर्वः वा स्यात् । यतः शुनकाः भषणम् अकुर्वन्तः स्नेहेन व्यवहरन्तः दृश्यन्ते'' इति वराहपालकम् उक्तवान् वृद्धवेषधारी रूपधरः ।



यावत् तस्य वचनं समाप्तं तावता धीरमतिः कुटीरं प्रविश्य तयोः समीपम् आगतवान् आसीत् ।

तं दृष्ट्वा वराहपालकः ससम्भ्रमम् उत्थाय महता प्रेम्णा स्वामिनं पुत्रम् इव आलिङ्ग्य - ''आगतः खलु वत्स ! चिरात् दर्शनं भवतः । भवान् पैलासं प्रति गतः आसीत् इति वार्ता श्रुता आसीत् मया । ततः कदा प्रत्यागतवान् भवान् ?'' इति पृष्टवान् आनन्दाश्रूणि स्रावयन् ।

''पैलासतः एव आगच्छन् अस्मि तात ! अस्माकं गृहस्य का वार्ता ? अपि मम अम्बा कुशलिनी ? ते दुष्टाः ताम् अधिकतया पीडितवन्तः तु न स्युः खलु ?'' इति पृष्टवान् धीरमतिः ।

''वत्स ! देवो दयालुः ! दैवकृपया सा निरपाया तिष्ठति । रात्रौ भवन्तं स्मरन्ती तदा तदा अश्रूणि स्रावयति स्म सा । तेभ्यः



दुष्टेभ्यः तस्याः मुक्तिः कदा इति तु न ज्ञायते !'' इति उक्तवान् वराहपालकः ।

आयुधधरस्य धीरमतेः आगमनं दृष्ट्वा तस्मै स्थलस्य कल्पनार्थं स्वस्थानात् उत्थातुम् उद्युक्तः अभवत् रूपधरः । तं तस्मात् प्रयत्नात् निवारयन् धीरमतिः उक्तवान् - ''आर्य ! उत्थानक्लेशः मास्तु भवतः । मम उपवेशनार्थम् अत्र अन्यत् आसनम् अस्ति एव'' इति ।

एतत् श्रुत्वा रूपधरः स्वस्थाने यथापूर्वम् उपविष्टवान् । वराहपालकः कृष्णाजिनं प्रसार्य धीरमतिम् उपवेशितवान् । ततः त्रयः अपि सन्तोषेण वार्तालापं कुर्वन्तः भोजनं कृतवन्तः ।

भोजनानन्तरं धीरमतिः वराहपालकं पृष्टवान् - ''तात ! एषः जनः कः ? कः एतम् अत्र आनीतवान् ?'' इति ।

''वत्स ! एषः वदति यत् अहं क्रीट्देशीयः इति । प्रपञ्चस्य भूयान् भागः मया दृष्टः इति वदति एषः । लोकसञ्चारः एतस्य ललाटे लिखितः स्यात् भगवता । अपायात् आत्मानं रक्षन् अत्र आगतवान् अस्ति एषः । एतं भवदधीनं करिष्यामि । ततः यथोचितं करोतु भवान्'' इति उक्तवान् वराहपालकः ।

''मां कष्टे पातयन् अस्ति खलु भवान् ? एतं कुत्र वा अहं नयेयम् ? अहम् अल्पवयस्कः । मम गृहं शत्रुभिः आक्रान्तम् अस्ति । तेषां पीडां सोढुम् एव न शक्नोमि अहम् । तेषां कारणतः मम गृहं प्रति कोऽपि न आगच्छति एव । 'अस्मासु काञ्चित् परिणयतु' इति वदतां तेषां दुष्टानां पीडां माता कथञ्चित् सहमाना दिनानि यापयन्ती अस्ति । एतादृशस्थितौ मम गृहं नीत्वा एतं व्यथितं तिरस्कारपात्रं च किं कुर्याम् ? किन्तु एतस्य साहाय्यं तु अवश्यं करिष्यामि अहम् । धरणार्थं वस्त्राणि पादरक्षां च दास्यामि एतस्मै । तीक्ष्णं खड्गं चापि दास्यामि । तानि सर्वाणि स्वीकृत्य एषः स्वोद्दिष्टं प्रदेशं गत्वा सुखेन वसतु नाम । अथवा अत्रैव वा वसतु । भवान् एतस्य योगक्षेमनिर्वहणभारं वहतु । किन्तु तत्र भवतः क्लेशः यथा न भवेत् तथा व्यवस्थां तु अहं करिष्यामि । दुष्टानां मध्ये एतस्य वासः मास्तु इति मम आशयः । एतस्य पीडां, तद्द्वारा मम अपमाननं च अहं न सहे'' इति उक्तवान् धीरमतिः ।

अनन्तरं सः पुनरपि वराहपालकम् उक्तवान् - ''भवान् मम गृहं गत्वा एकान्ते मातरं निवेदयतु यत् अहं पैलासतः प्रत्यागतः अस्मि इति, अत्र सकुशलम्

अस्मि इति च । माम् अधिकृत्य चिन्ता करणीया नास्ति इति तां सूचयतु'' इति ।

''वत्स ! भवतः निर्गमनात् आरभ्य भवतः मातामहः भोजनम् एव न कृतवान् इति श्रूयते । अतः भवतः प्रत्यागमनवार्तां तं निवेद्य आगच्छामि वा ? ज्येष्ठस्य तस्य परितापस्य निवारणम् अस्माकं कर्तव्यं खलु ?'' इति उक्तवान् वराहपालकः ।

''अन्यत्र कुत्रापि गमनं मास्तु भवतः । मातरं ममागमनवार्तां निवेद्य मातामहं प्रति एतां वार्तां प्रेषयतु इति सम्प्रार्थ्य भवान् साक्षात् अत्र एव आगच्छतु'' इति सूचितवान् धीरमतिः ।

वराहपालकः एतां सूचनां शिरसा वहन् ततः निर्गतवान् । कुटीरे पिता पुत्रौ च अवशिष्टौ ।

तदा तत्र प्रत्यक्षीभूता बुद्धिमतीदेवी रूपधरं संज्ञया सूचितवती - ''बहिः आगच्छतु भवान्'' इति ।

रूपधरः कुटीरात् बहिः आगतवान् । तदा बुद्धिमतीदेवी - ''पुत्रं स्वपरिचयम् उक्त्वा तस्य साहाय्येन शत्रूणां संहारार्थं प्रयत्नं करोतु । तेषां दुष्टानां पापघटः पूर्णप्रायः अस्ति । भवतोः रक्षणम् अहं सदा करिष्यामि । अतः भवद्भ्याम् अल्पम् अपि भयं प्राप्तव्यं नास्ति'' इति वदन्ती मन्त्रदण्डेन रूपधरं स्पृष्टवती ।

अनन्तरक्षणे एव रूपधरस्य वार्धक्यम् अपगतम् । सः तरुणत्वेन परिवृत्तः आसीत् । तस्य वेषभूषादयः अपि तरुणोचिताः आसन् ।

एवं रूपपरिवर्तनं प्राप्य अन्तः आगतं रूपधरं दृष्ट्वा आश्चर्यम् अनुभवन् धीरमतिः - ''आर्य ! कः भवान् ? देवताकुलोत्पन्नः स्यात् भवान् इति अहं भावये । यतः मनुष्याः एवम् अपेक्षानुगुणं रूपपरिवर्तनं प्राप्तुं कदापि न अर्हन्ति । अन्यच्च मानवमात्रस्य मुखे एतादृशम् अपूर्वं





तेजः अपि कदापि न भवति'' इति उक्तवान् ।

तदा रूपधरः - ''वत्स ! भवतः पिता रूपधरः अहम् एव । अनेकानि कष्टानि सोढ्वा इदानीम् अत्र आगतवान् अस्मि'' इति उक्त्वा स्वकथां विस्तरेण निवेदितवान् । ततश्च - ''अस्माकं गृहे कति जनाः दुष्टाः सन्ति इति, ते कीदृशाः इति, तेषां सामर्थ्यं कियत् इति च वदतु । तान् सर्वान् यमसदनं प्रेषयाव आवाम्'' इति उक्तवान् च ।

''ते आहत्य अष्टोत्तरशतं जनाः सन्ति । तैः सह केचन सेवकाः अपि सन्ति । आवाम् उभौ तयोः नाशनं कथं कर्तुं शक्नुयाव ?'' इति सन्देहेन पृष्टवान् धीरमतिः ।

''मन्दमते ! न आवाम् असहायौ । आवयोः रक्षिकारूपेण बलरूपेण च बद्धिमतीदेवी अस्ति । तस्याः अनुग्रहतः आवयोः जयः तु निश्चितः एव । अतः भवान् निश्चिन्तः सन् श्वः एव गृहं गच्छतु । अहं भिक्षुकवेषं धृत्वा वराहपालकेन सह आगमिष्यामि । ते दुष्टाः विविधैः उपायैः मम अपमाननं करिष्यन्ति चेदपि भवान् सहनया मौनं तिष्ठतु । किन्तु सर्वदा कटाक्षेण मां परिशीलयन् भवतु । यदा अहं सूचयिष्यामि तदा भित्तिस्थान् खड्गान् कुन्ताद्यायुधानि च अट्टस्थे प्रकोष्ठे रक्षतु । 'आयुधानि कुत्र' इति यदि ते पृच्छेयुः तर्हि 'अयस्किट्टयुक्तानि तानि अन्यत्र नीतवान् अस्मि' इति शान्तस्वरेण एव वदतु । शूलद्वयं, खड्गद्वयं, बाणवारकद्वयं च यथा हस्तलभ्यं स्यात् तथा रक्षतु । मद्यपाने प्रवृत्तिं, विना कारणं कलहे आसक्तिं च कदापि मा करोतु । अन्यः स्मर्तव्यः विषयः नाम मम प्रत्यागमनं केनापि न ज्ञायेत । भवतः मात्रा अपि न ज्ञायेत । अतः एतद्विषये विशेषजागरूकता आश्रयणीया भवता'' इति धीरमतिम् उक्तवान् रूपधरः।

यया नौकया धीरमतिः प्रयाणं कृतवान् आसीत् सा नौका इथाकातीरम् आगता । किन्तु ततः धीरमतिः तु न अवतीर्णः एव । नौकाचालकेषु अन्यतमः कश्चित् रूपधरस्य गृहं प्रति प्रस्थितवान् । वराहपालकः अपि तस्मिन् एव समये तत्र उपस्थितः अभवत् ।

धीरमतेः अनागमनं दृष्ट्वा दुष्टाः आश्चर्यचकिताः अभवन् । धीरमतेः मारणार्थं गताः अल्पे एव काले प्रत्यागतवन्तः । ततः ते सर्वे सम्भूय रहस्य-समालोचनं कृतवन्तः ।

सर्वान् उद्दिश्य दुर्बुद्धिः उक्तवान् -

"एतत्सन्दर्भे धीरमतिः कथमपि प्राणरक्षणे समर्थः जातः । यदि शीघ्रम् एव वयं तस्य प्राणहरणं न कुर्याम तर्हि अस्माभिः अपायः सम्मुखीकरणीयः भवेत् । प्रजासु केचन एतावता एव अस्माकं विषये असन्तोषं प्राप्तवन्तः सन्ति । धीरमतिः प्रत्यागत्य अस्माकं प्रयत्नं सर्वान् यदि वदेत् तर्हि जनाः अस्मान् इतः उच्चाटयेयुः । अतः नगर-प्रवेशात् पूर्वम् एव अस्माभिः सः मारणीयः । तं मारयित्वा तस्य सम्पत्तिं विभज्य स्वीकरवाम । यः पद्ममुखीं परिणेष्यति, सः रूपधरस्य गृहस्य स्वामित्वम् अर्हति । यदि धीरमतिः सजीवं प्रत्यागमिष्यति तर्हि अस्माभिः अनन्य-गतिकतया इतः निर्गन्तव्यं भविष्यति । स्वगृहे स्थित्वा पद्ममुख्याः परिणयार्थं प्रयत्नः करणीयः भवेत् । फलं तु दैवाधीनं स्यात् । अतः इदानीं किं करणीयम् इति विमृश्य वदन्तु भवन्तः" इति ।

'धीरमतेः हननार्थं पुनः प्रयत्नः मास्तु' इति केषाञ्चित् आशयः आसीत् ।

"धीरमतिः यद्यपि बालः, तथापि सः सामान्यः तु न । तस्य जनबलम् अपि अधिकम् अस्ति । एतत् सर्वम् अस्माभिः एतावता एव ज्ञातम् अस्ति । अतः किं धीरमतेः हननार्थं प्रयत्नेन" इति उक्तवान् कश्चित् ।

"धीरमतेः मरणयोगः अस्ति वा न वा इति यावत् न ज्ञायते तावत् अस्माकं प्रयत्नेन न किमपि प्रयोजनम् । यदि तस्य मरणयोगः अस्ति इत्येतत् निश्चितं तर्हि तस्य मारणम् अहम् एव करिष्यामि । मरणयोगः यदि तस्य नास्ति तर्हि अस्माकम् अनन्ताः अपि प्रयत्नाः विफलाः भविष्यन्ति" इति उक्तवान् अपरः ।

एषः अंशः सर्वैः अङ्गीकृतः अभवत् । 'ज्योतिषिकस्य सकाशात् धीरमतेः मरणयोगः सद्यःकाले अस्ति वा न वा इति ज्ञातव्यम्' इति निश्चित्य ते सर्वे ततः निर्गताः ।

यदा वराहपालकः प्रत्यागतः तदा रूपधरः यथापूर्वं वृद्धवेषं प्राप्तवान् आसीत् । बुद्धिमतीदेवी एवं कृतवती आसीत् । रात्रिभोजनस्य अनन्तरं धीरमतिः पित्रा सह वराहपालकस्य कुटीरे एव शयनं कृतवान् । – (अनुवर्तते)



# वार्ताविषयाः बालाः

## जिह्वाग्रे सकलम्

आफ्रिकाखण्डे कति देशाः सन्ति ? टर्क्मेनिस्थान्राज्यस्य राजधानी का ? उजेकिस्थानदेशस्य विनिमयद्रव्यस्य किं नाम ? – इत्यादयः प्रश्नाः मुम्बयीनगरस्य पत्रकारभवने मोनिकाम् उद्दिश्य पृष्टाः । घण्टां यावत् प्रवृत्ते एतस्मिन् प्रश्नोत्तरकार्यक्रमे तया एकः अपि प्रमादः न कृतः । कस्यापि उत्तरकथने विलम्बः न अनुष्ठितः । प्रपञ्चस्थानां १८५ देशानां राजधानी-विनिमयद्रव्यादीनां विवरणं तया हृद्गतीकृतम् अस्ति । एतादृशसामर्थ्यवत्याः मोनिकायाः किं वयः इति ? केवलं पञ्च वर्षाणि ! प्रथमकक्ष्यायां पठति सा ! प्रश्नोत्तरकार्यक्रमस्य अनन्तरं तस्याः माता वनजामेनन्वर्या पुत्र्याः एतादृशसामर्थ्यस्य कारणम् एवं वदति – 'गते डिसेम्बर्मासे उपायनरूपेण तस्यै प्रपञ्चप्रतिकृतिः (ग्लोब्) दत्ता । ताम् एव सदा परिशीलयन्ती सा देश-राजधान्यादीनां परिचयं प्राप्तवती' इति ।

'तत्काले एव सा विश्वकोषम् (एन्सैक्लोपीडिया) अपि परिशीलयति स्म ' इति वदति तस्याः पिता । 'प्रतिभाम् अभिज्ञाय यदि योग्यः प्रोत्साहः दीयेत तर्हि प्रतिभाशालिता प्रकाशिता भविष्यति' इत्येतस्य उदाहरणम् अस्ति मोनिका ।

## मेधाविनी एषा

'मेन्सा' - इत्येषा मेधाविसदस्ययुक्ता अन्ताराष्ट्रिया संस्था । अत्र इंग्लेण्ड्देशीयाः एव ४०,००० सदस्याः सन्ति । अत्यल्पवयस्का बङ्गालप्रदेशीया रियन्नान्पेयिन्नामिका बालिका एतस्याः संस्थायाः सदस्यतां प्राप्तवती अस्ति । तया संस्थया आयोजितायां बुद्धिमत्तापरीक्षायां सा विशिष्टस्थानं प्राप्तवती आसीत् । ज्येष्ठपठनयोग्यानि पुस्तकानि सा लीलया पठति । सा पूर्वप्राथमिककक्ष्यायाः विद्यार्थिनी !

## प्रतिभावती बालिका

चीनादेशस्य दक्षिणभागीया डाङ्गनामिका अल्पवयस्का बालिका चीनाभाषायाः ३,००० पदानि पठितुं समर्था । तेषु षट्सहस्राधिकानि अक्षराणि भवन्ति । चीनीभाषायां प्रतिपदं विभिन्नाः संज्ञाः भवन्ति । २० मासीया एव एषा बालिका २०० अधिकानि शिशुगीतानि कण्ठस्थीकृतवती आसीत् । सहस्राधिकानि पदानि लेखितुम् अपि शक्नोति स्म सा । एतस्याः नाम गिन्नीसुपुस्तके उल्लिखितम् अस्ति इत्येतत् न आश्चर्याय खलु ?

## प्रकृतिमित्रम्

देहलीनगरीयः हर्षभात्रानामकः अष्टमकक्ष्यायाः विद्यार्थी पर्यावरणरक्षणार्थं 'पञ्चवटी'नामिकां योजनां रूपितवान् अस्ति । पर्यावरणसंरक्षणविषये बालेषु आसक्तिम् उत्पादयितुं विश्वसंस्थया एकं बालककार्यागारम् आयोजितम् आसीत् । ८० अधिकदेशेभ्यः समागताः बालाः तत्र भागं गृहीतवन्तः आसन् । अस्मद्देशस्य प्रतिनिधिः आसीत् द्वादशवर्षीयः हर्षः । सः तस्मिन् कार्यागारे स्वाभिप्रायं प्रकटयन् 'पञ्चवटी' योजनां विवृतवान् । सर्वेषु अपि देशेषु परिसरसंस्थाः (एको क्लब्) भवेयुः इति, ताः तदा तदा समावेशान् आयोजयेयुः इति च सः सूचितवान् । यस्मिन् वयसि स्थिताः बालाः प्रायेण क्रीडादिविनोदैः दूरदर्शनकार्यक्रमाणां दर्शनेन, गणकयन्त्रस्य उपयोगेन च कालं यापयन्ति, तस्मिन् वयसि स्थितः एषः हर्षः परिसरसंरक्षणे आसक्तिं वहन् योजनां रूपयन् अस्ति यत् तत् तु नितरां श्लाघनीयम् एव ।




# अगोचरशक्तयः

स्वीकृतं कार्यं यदि अहं परित्यजामि तर्हि तत् मम राजत्वस्य एव अपमाननाय इति विचिन्त्य दृढव्रतः त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान् । वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । ततः यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च ।

तदा शवान्तर्गतः वेतालः अवदत् - ''भोः राजन् ! भवान् अमानुषीम्, अगोचरीं काञ्चित् शक्तिं सम्पादयितुं यतमानः स्यात् । तथा चेत् एतस्यां भयङ्कररात्रौ अस्मिन् घोरे श्मशाने विविधानि कष्टानि भवता सम्मुखीकरणीयानि भवेयुः इति भाति मम । विभिन्नाः कथाः घटनाः च श्रुत्वा केचन भ्रमम् अनुभवन्ति यत् अनायासेन अगोचरशक्तिः लब्धुं शक्या इति । पुनः केचन काकतालीयघटनानाम् आधारेण ऊहां कुर्वन्ति यत् मम अगोचरशक्तिबलम् अस्ति इति । अपरे केचन भ्रमम् अनुभवन्ति

## वेतालकथा



यत् गुर्वादीनाम् अनुग्रहेण मया अगोचरशक्तिः प्राप्ता अस्ति इति । तादृशं भ्रमं भवान् मा अनुभवतु इति उद्देशेन हिमकरनामकस्य राजकुमारस्य कथां विस्तरेण श्रावयामि । मार्गायासपरिहारार्थं तां कथां श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

तुङ्गभद्रानदीतीरे कमलापुरं नाम लघु राज्यम् आसीत् । तस्य राज्यस्य युवराजः आसीत् हिमकरः । युवराजः हिमकरः, मन्त्रिणः पुत्री चारुमती, सेनाधिपतेः पुत्रः भद्रवर्मा च बाल्यतः एव स्नेहिताः आसन् । हिमकरः भद्रवर्माः च दश वर्षाणि यावत् मिलित्वा गुरुकुले विद्याभ्यासं कृतवन्तौ ।

तौ श्रद्धया विद्याभ्यासं कुरुतः स्म । सर्वेषु अपि विषयेषु तयोः एव अग्रगण्यता भवति स्म । एतौ सदा सहैव आधिक्येन भवतः स्म इति कारणतः सहाध्यायिनः वदन्ति स्म यत् एतौ रामलक्ष्मणौ एव इति । केचन अल्पमतयः एतयोः उपहासं कुर्वन्ति स्म । तथापि तौ एतादृशं सर्वं अपरिगणयन्तौ परस्परस्नेहेन व्यवहरन्तौ अध्ययने निरतौ भवतः स्म ।

अथ कदाचित् तयोः अध्ययनं समाप्तम् । गुरुकुलतः स्वराज्यं प्रति आगमनसमये यथा भद्रवर्मा न जानीयात् तथा गुरुकुलस्य प्रधानाचार्यः हिमकरं विशिष्टां परकायप्रवेशविद्यां बोधितवान् । आचार्यस्य आशीर्वादं प्राप्तवन्तौ उभौ अपि स्वराज्यं प्रतिगतवन्तौ ।

प्रासादस्य प्रधानद्वारस्य पुरतः विद्यमाने क्रीडाङ्गणे प्रतिदिनं सायङ्काले युवकानां मध्ये विविधाः स्पर्धाः प्रचलन्ति स्म । कदाचित् धावनस्पर्धायां कस्यचित् सेनानायकस्य पुत्रः हिमकरं पराजितवान् । सः अहङ्कारेण विविधवचनैः हिमकरं निन्दितवान् । परन्तु हिमकरः कामपि प्रतिक्रियाम् अप्रकटयन् मौनं ततः गतवान् । परन्तु तस्मिन् दिने रात्रौ एव सेनानायकस्य पुत्रं कश्चित् विषजन्तुः दष्टवान् । अतः सः मासं यावत् शय्याम् आश्रितवान् ।

पुनः कदाचित् वृन्दावने आस्थानवैद्यस्य पुत्रः विनाकारणं हिमकरेण सह कलहं कृत्वा तस्य उपरि शिलाखण्डं क्षिप्तवान् । एतस्मात् हिमकरस्य अधिकः व्रणः न जातः । परन्तु वैद्यस्य पुत्रः तस्मिन् दिने एव यदा सस्यानां जलसेचनं कुर्वन् आसीत् तदा सर्पः तं दष्टवान् । तस्य पितुः वैद्यकीयसाहाय्येन सः जीवितवान् । एषः विषयः हिमकरेण ज्ञातः ।

चारुमती अतीव सुन्दरी आसीत् ।

तस्याः विषये हिमकरस्य, भद्रवर्मणः च अनुरागः आसीत् । कदाचित् ते त्रयः अपि महाराजस्य उद्याने विहारार्थं गतवन्तः । तत्र विचित्रं नाम अकाले आम्रवृक्षस्य उपरि एकं फलम् आसीत् ।

तत् फलं दृष्टवती चारुमती - ''तत् फलम् आनीय ददातु'' इति तौ उभौ अपि सूचितवती ।

अनुक्षणम् एव भद्रवर्मा वृक्षम् आरोढुम् उद्युक्तः । हिमकरः अपि तत् फलं चारुमत्यै दातुम् इच्छन् वृक्षम् आरोढुम् उद्युक्तः । तस्मिन् क्षणे सः किञ्चिद्दूरे मृतं शुकम् एकं दृष्टवान् । अनुक्षणम् एव सः आत्मना अधीतायाः परकायप्रवेशविद्यायाः साहाय्येन शुकस्य शरीरं प्रविश्य वृक्षम् आरुह्य फलम् आनीतवान् । पुनः स्वशरीरं प्रविश्य फलं चारुमत्यै दत्तवान् । एतत् सर्वं क्षणार्धे एव प्रवृत्तम् ।

एतत् दृष्टवान् भद्रवर्मा कोपम् असहमानः - ''भोः राजकुमार ! एतत् तु अन्याय्यम् अस्ति । वृक्षम् आरोढुं भवतः सहना नास्ति । अतः मन्त्रतन्त्रम् आश्रित्य भवान् फलम् आनीतवान् । एतादृशम् अनुचितम् कार्यं कर्तुं किं भवतः लज्जा न भवति ? क्षत्रियकुलजाताः कदापि कार्यसाधनार्थं वाममार्गम् न आश्रयन्ति । किन्तु भवता तदेव कृतम् । धिक् भवन्तम् । यदि धैर्यम् अस्ति तर्हि रणरङ्गे स्थित्वा युद्धं करोतु । तदा एव क्षत्रियाणां महत्त्वं प्रमाणितं भवति । परन्तु कुयुक्त्या यत् क्रियते तत् वीरस्य शोभाकरं न'' इति क्रोधमिश्रितस्वरेण उच्चैः वदन् वृक्षतः अवतरन् अधः पतितवान् । तदा भद्रवर्मणः



पादस्य अस्थिभङ्गः जातः । एतस्मात् कारणात् मासत्रयं यावत् सः चलितुं न शक्तवान् ।

एतादृशघटनानन्तरं हिमकरः ज्ञातवान् यत् - 'काचित् अदृष्टशक्तिः मम साहाय्यं करोति । तस्मात् ये मां निन्दन्ति तेषां दण्डनं भवति । एतावत्पर्यन्तं प्रवृत्ताः घटनाः एव अत्र प्रमाणम्' इति ।

याः घटनाः घटिताः ताः सर्वाः काकतालीयाः न इति तस्य मनः वदति स्म । 'मां ये द्विषन्ति ते सर्वे कष्टम् अनुभविष्यन्ति' इति दृढविश्वासः हिमकरे उत्पन्नः ।

राजकुमारः मन्त्रिणः पुत्र्यां चारुमत्याम् अनुरक्तः इति ज्ञातवान् राजा एकदा हिमकरम् उक्तवान् - ''भवतः पट्टाभिषेकः करणीयः इति चिन्तितवान् अस्मि अहम् । तस्मिन् समये एव भवतः विवाहः



भविष्यति चेदपि वरम् एव । एतस्मिन् विषये मन्त्रिणा सह चर्चां करोमि किम् ?'' इति ।

स्वपिता स्वस्य मनोभिलाषाम् अवगतवान् इति ज्ञात्वा हिमकरः सम्मतिपूर्वकं मन्दहासं प्रकटितवान् । अन्यां राजकुमारीं परिणयतु इति पिता अनुरोधं न कृतवान् इत्यतः हिमकरः अतीव सन्तुष्टः अभवत् ।

एतां शुभवार्तां चारुमतीं श्रावयितुम् इच्छन् हिमकरः - ''सायङ्काले नदी-विहारार्थम् आगच्छतु'' इति वार्तां चारुमत्यै प्रेषितवान् ।

एतां वार्तां प्राप्तवती चारुमती सायङ्काले निश्चितसमये नदीसमीपम् आगतवती । परन्तु अनिरीक्षितरूपेण भद्रवर्मा अपि तया सह नदीविहारार्थं प्रस्थितवान् आसीत् । अतः त्रयः अपि उडुपेन लघुद्वीपं प्रति प्रस्थितवन्तः ।

विहारं समाप्य प्रत्यागमनसमये उभौ अपि स्वपितुः निर्णयं श्रावितवान् हिमकरः । एतं विषयं ज्ञात्वा भद्रवर्मा नितरां सन्तुष्टः भविष्यति इति हिमकरः भावितवान् आसीत् । यतः भद्रवर्मा अपि चारुमत्याम् अनुरक्तः अस्ति इति सः न जानाति स्म । यदि तथा अज्ञास्यत् तर्हि तस्मिन् समये स्वविवाहविषयं सः न अवदिष्यत् एव ।

भद्रवर्मा शीघ्रकोपी निर्भयः च । सः आघातकरम् एतं विवाहप्रस्तावं श्रुत्वा महता कोपेन हिमकरं दूषितवान् - ''भवान् राजकुमारः इति कारणतः स्वस्य अधिकारस्य दुरुपयोगं कुर्वन् अस्ति । अहं चारुमत्याम् अनुरक्तः इति भवान् जानन् अपि तां परिणेतुं उद्युक्तः अस्ति । भवान् मित्रद्रोही । भवतः पिता राजा । चारुमत्याः पिता मन्त्री । अतः भवतः इच्छा पूरिता भविष्यति । भवान् एतादृशः दुष्टः इति मया न ज्ञातम् आसीत् । यदि भवति क्षात्रधर्मः अस्ति तर्हि इदानीम् एव भवान् मया सह बाहुयुद्धं करोतु । अधिकारबलात् तरुण्याः परिणयेन किं वा साध्यते भवता ? न किमपि । मया सह युद्धं कृत्वा स्वबाहुबलं प्रमाणीकृत्य तां परिणयतु'' इति वदन् युद्धार्थम् आहूतवान् ।

चारुमती एतत् सर्वं पश्यन्ती अपि अपश्यन्ती इव निर्लिप्ता सती उपविष्टवती आसीत् ।

हिमकरः कोपस्य निग्रहणं कुर्वन्, 'अल्पे एव काले भद्रवर्मणः कोपः शान्तः भवेत्' इति चिन्तयन् मौनं स्थितवान् ।

परन्तु भद्रवर्मा क्रोधेन खड्गं कोषात् आकृष्य युद्धार्थं सिद्धः अभवत् । 'इतः परं तूष्णीं स्थित्वा न किमपि प्रयोजनम्' इति विचिन्त्य हिमकरः पूर्वतनघटनाः सर्वाः स्मरन् भद्रवर्मणः मणिबन्धं दृढं गृहीतवान् । परन्तु भद्रवर्मा अपि आवेशेन तस्य उपरि आक्रमणं कर्तुम् प्रयत्नं कृतवान् । तदा उडुपः जले निमज्जितः । प्रथममेव नद्यां पतिता चारुमती पृष्ठतः अदृष्ट्वा तीरं प्रति तरितुम् उद्युक्ता । हिमकरेण सह भद्रवर्मा अपि जले पतितवान् । भद्रवर्मणः कारणतः एव एतत्सर्वं प्रवृत्तम् इति हिमकरः यदा चिन्तयन् आसीत् तदा उडुपस्य अग्रभागे तस्य शिरसः घट्टनं जातम् । एतस्मात् सः मूर्च्छितः जातः । यदा सः सचेतनः जातः तदा भद्रवर्मा हिमकरस्य उदरं नुदन्, तेन पीतं जलं बहिः आनेतुं प्रयतमानः आसीत् । तस्य पार्श्वे एव चारुमती आसीत् । हिमकरः यदा उत्थितवान् तदा भद्रवर्मा कोपेन तं दृष्ट्वा वेगेन ततः निर्गतवान् ।

तदा चारुमती हिमकरम् उक्तवती - ''भवान् उत्तमं तरणं जानाति चेदपि किमर्थं शिरसः घट्टनं प्राप्तवान् इत्यस्य कारणं विवृण्वन् भद्रवर्मा रहस्यमेकं माम् उक्तवान् - 'मयि विद्यमानया कयाचित् अगोचरशक्त्या मम शत्रवः कष्टम् अनुभवन्ति' इति । कदाचित् शत्रूणां मरणम् अपि भवेत् इति सः माम् उक्तवान्'' इति ।

एतत् श्रुत्वा हिमकरः चारुमतीं किमपि प्रष्टुं यावत् उद्युक्तः तावता एव सा ततः वेगेन गतवती ।

एतदनन्तरं हिमकरः अन्तःपुरं गत्वा पितरम् उक्तवान् - ''इदानीम् विवाहस्य इच्छा नास्ति । किञ्चित्कालं यावत् देशपर्यटनं करोमि'' इति । अनन्तरं पितुः अनुज्ञां प्राप्तवान् सः देशपर्यटनार्थं गतवान् ।



वेतालः एवं कथां समाप्य अवदत् - ''भोः राजन् ! हिमकरस्य एतादृशविचित्र-व्यवहारस्य अन्तरङ्गं किम् अस्ति ? किमर्थं सः विवाहार्थम् अनुमतिं दत्त्वा अपि अन्ते देशपर्यटनार्थं गतवान् ? 'यदि अहं चारुमतीं वृणोमि तर्हि भद्रवर्मणः अगोचरी शक्तिः मां बाधेत' इति चिन्तयन् सः भीतः वा ? अथवा भद्रवर्मा मां रक्षितवान् इति कृतज्ञताभावनया चारुमत्याः परिणयविचारं परित्यक्तवान् वा सः ? अथवा परिणयप्रस्तावनिराकारस्य अन्यत् एव विशिष्टं कारणं स्यात् वा ? एतादृश-सन्देहानाम् उत्तरं भवान् जानन् अपि यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः मौनं स्थातुम् अशक्तः सन् - ''अत्र अन्यत् किमपि कारणं नास्ति । पूर्वं हिमकरः स्वस्मिन् विद्यमानायाम् अगोचरशक्त्यां विश्वसितवान् आसीत् । अतः भद्रवर्मणा सह यदा कलहः प्रवर्तमानः आसीत् तदा हिमकरः चिन्तितवान् आसीत् यत् भद्रवर्मा जले निमज्जेत् इति । परन्तु स्वयमेव जले निमज्जितः अभवत् । अतः अगोचर-शक्त्याः विषये तस्य विश्वासः अपगतः । यः अगोचरशक्तौ एव न विश्वसिति सः कथं वा भावयेत् यत् अन्यस्मिन् सा अस्ति इति ? अतः एतत् तु सिद्धं यत् भद्रवर्मतः हिमकरः भीतः न इति । 'चारुमती मयि अनुरागवती' इति हिमकरः चिन्तितवान् आसीत् । किन्तु नौकातः पतिता चारुमती कस्यापि अपायम् अचिन्तयन्ती स्वप्राणरक्षणार्थं तीरं यदा गतवती तदा हिमकरः निर्णीतवान् यत् चारुमती मयि अनुरागवती न इति । अतः सः चारुमत्याः परिणयविचारं परित्यक्तवान् । पितरं उक्तवान् यत् अहं देशपर्यटनं कर्तुम् इच्छामि इति । एवं चारुमत्यां तस्य अनुरागः एव न आसीत् इत्यतः 'प्राणान् रक्षितवतः भद्रवर्मणः निमित्तं चारुमतीविषयकम् अनुरागं परित्यक्तवान्' इति चिन्तनम् अपि सर्वथा अयुक्तम् एव'' इति ।

एवं वदतः राज्ञः मौनभङ्गः यदा जातः तदा शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।





# बुद्धिमत्ता

रुद्रपुरग्रामे वसतः सीतारामस्य विश्वासः आसीत् यत् यङ्कमपि वादे जेतुं मम सामर्थ्यम् अस्ति इति । तस्मिन् एव ग्रामे सोमशेखरः नाम कश्चित् निवसति स्म । जनाः वदन्ति स्म यत् वादे सोमशेखरं जेतुं कोऽपि न शक्नोति इति ।

कदाचित् सीताराम-सोमशेखरौ क्षेत्रे मिलितौ । सोमशेखरेण सह वादं कर्तुम् इच्छन् सीतारामः उक्तवान् - "चरणार्थं मम क्षेत्रम् आगताः भवतः अजाः मम धान्यसस्यानि नाशितवन्तः । एतदर्थं भवता परिहारधनं दातव्यं, प्रतिदिनं क्षीरं दातव्यं वा" इति ।

"भवतः क्षेत्रं सस्यविहीनं दृश्यते । सस्यविहीने क्षेत्रे अजाः कथम् आगन्तुम् अर्हन्ति ?" इति पृष्टवान् सोमशेखरः ।

"कथम् इति ? पश्यतु । चरन्त्यः धेनवः एव अत्र प्रमाणम्" इति वदन् चरन्तीः काश्चन धेनूः प्रदर्शितवान् सीतारामः ।

"धेनवः स्युः । अजाः तु न दृश्यन्ते खलु ?" इति उक्तवान् सोमशेखरः ।

"एवं तर्हि आगच्छतु मया सह । अजान् एव प्रदर्शयिष्यामि" इति वदन् सोमशेखरम् अग्रे नीतवान् सीतारामः । तदा तत्र धेनूनां पृष्ठतः एकः अजः दृष्टिगोचरः जातः । "पश्यतु तत्र । कश्चन अजः दृश्यते खलु ? एवं तर्हि निर्णीतम् एव यत् अजाः अपि अत्र चरणार्थम् आगन्तुम् अर्हन्ति इति" इति गर्वेण उक्तवान् सीतारामः ।

"सः अजः चरणार्थम् एव आगतः इत्यत्र किं प्रमाणम् ? यतः तस्य तृण-पर्णादिभक्षणं प्रत्यक्षं न दृश्यते खलु ?" इति उक्तवान् सोमशेखरः ।

"एवं तर्हि तदपि प्रदर्शयिष्यामि" इति वदन् सीतारामः समीपे स्थितम् अजं पार्श्वस्थं गुल्मम् अभिलक्ष्य प्रेषितवान् । गुल्मसमीपं गतः अजः पर्णभक्षणे उद्युक्तः अभवत् ।

"इदानीं किं वदति भवान् ?" इति

पृष्टवान् सीतारामः ।

''न एषः अजः मम । अतः मम उपरि दोषम् आरोपयितुं न शक्यते'' इति उक्तवान् सोमशेखरः ।

तदा कुपितः सीतारामः उपहासमिश्रितेन स्वरेण उक्तवान् - ''सर्वेषाम् अजानां व्यवहारः समानः भवति इति प्रायः भवान् न जानाति इति मन्ये'' इति ।

''तथा स्यात् नाम । तथापि प्रत्यक्षं दृष्टे एव मम विश्वासः'' इति उक्तवान् सोमशेखरः ।

अत्रान्तरे सोमशेखरस्य अजानां पालकः अजान् चारयन् तेन एव मार्गेण आगतवान् । तान् अजान् प्रदर्शयन् पृष्टवान् सीतारामः - ''तत्र गच्छन्तः अजाः भवतः एव वा'' इति ।

''आम् । ते मम एव'' इति उक्तवान् सोमशेखरः ।

सीतारामः अजपालकं स्वसमीपम् आहूय - ''एते अजाः तृणानि पर्णानि च खादन्ति वा न वा ?'' इति तं पृष्टवान् ।

तदा सः अजपालकः आश्चर्यं प्रकटयन्- ''लोके अजखादनायोग्यं तृणं पर्णं वा दृष्टं श्रुतं वा भवता ? एवं स्थिते कः एषः भवतः प्रश्नः - 'एते तृणपर्णादीनि खादन्ति वा ?' इति '' इति उक्तवान् ।

''तर्हि कानिचन पर्णानि खादयतु तावत्'' इति उक्तवान् सीतारामः । अजपालः अजान् गुल्मसमीपं नीतवान् । अजाः सन्तोषेण पर्णखादने मग्नाः जाताः ।

तदा विजयगर्वेण हसन् सीतारामः - ''पश्यतु रे, भवतः अजाः एव मम क्षेत्रे सस्यानि खादितवन्तः इत्यत्र किम् अन्यत् प्रमाणम् अपेक्ष्यते ?'' इति पृष्टवान् ।

तदा मुखं परिवर्त्य स्थितः सोमशेखरः - ''अहं तान् अजान् न दृष्टवान् एव'' इति उक्तवान् ।

''तत् भवतु नाम । मया करिष्यमाणः आरोपः अवितथः इति तु अङ्गीक्रियते एव खलु भवता ?'' इति उक्तवान् सीतारामः ।

''तत् कथम् अङ्गीकर्तुं शक्येत ? यत् प्रत्यक्षं न दृष्टं तत् मया कदापि न अङ्गीक्रियते'' इति उक्तवान् सोमशेखरः ।

एतत् श्रुत्वा सोमशेखरस्य बुद्धिमत्ताम् अङ्गीकुर्वन् सीतारामः स्वस्य पराजयम् अपि अङ्गीकृतवान् ।



रचना - मीरा नायर् ◆ चित्रम् गौतमसेनः

# कर्णाटकराज्ये दक्षिणान्ते.....




ताडवृक्षैः प्राधान्येन शोभमाने दक्षिणकन्नडजनपदे उद्यावरनदीसङ्गमे मल्पे-नौकास्थानम् अस्ति । मीनसङ्ग्रहणं, मीनशोषणं च प्राधान्येन प्रचलति अत्र ।

मल्पेतीरम् अतिरमणीयम् । एतस्य पश्चिमभागे त्रयः शिलामयाः द्वीपाः सन्ति । तेषु 'शुष्कनारिकेलद्वीपः' अपि अन्यतमः । अत्र लावारसेन निर्मिताः स्तम्भाकारिकाः शिलाः सन्ति । एताः भौगोलिकपरिवर्तनं द्योतयन्ति । ६० कोटिवर्षेभ्यः पूर्वं भूमितः उद्गताः लावारसाः एवं शिलारूपं गतवन्तः इति भूगर्भशास्त्रज्ञाः वदन्ति ।

मल्पेतः ४ कि. मी. दूरे दक्षिणदिशि प्रसिद्धम् उडुपिक्षेत्रम् अस्ति । सप्तशतवर्षेभ्यः पूर्वं द्वैतमतप्रवर्तकः मध्वाचार्यवर्यः अत्र अष्ट मठान् स्थापितवान् । अत्रत्यः कृष्णविग्रहः परिवर्तितमुखः अस्ति ।

१५५०तमे क्रिस्ताब्दे एतत्प्रदेशे जातः कनकदासः महाविष्णुभक्तः । किन्तु सः अजपालककुले जातः । तम् अश्रेष्ठ-कुलजातं ज्ञात्वा मन्दिरजनाः तदीयं मन्दिरप्रवेशं



*श्रीमध्वाचार्यविग्रहः*

*द्वीपस्थाः लावारसनिर्मिताः स्तम्भाकारिकाः शिलाः*



*उडुपिक्षेत्रस्थं श्रीकृष्णमन्दिरम्*

निराकृतवन्तः । द्वारसमीपे तस्य स्थितिम् अपि निषिद्धवन्तः ते । स्वस्य असहायकस्थितिं स्मरन् खिन्नः कनकदासः मन्दिरस्य पृष्ठभागे स्थित्वा भगवतः स्तुतिं कृतवान् । एतस्मात् सन्तुष्टः श्रीकृष्णः वातायनद्वारा कनकाय स्वमुखं दर्शितवान् । ततः आरभ्य तत् वातायनं 'कनकवातायनम्' इत्येव प्रसिद्धं जातम् ।

प्रतिदिनम् अत्र सहस्रशः भक्ताः श्रीकृष्णदर्शनार्थम् आगच्छन्ति । पर्यायवर्षेषु महता वैभवेन प्रचलतः पर्यायोत्सवस्य निमित्तं तावत् लक्षशः जनाः आगच्छन्ति ।

उडुपिनगरं न केवलं तीर्थक्षेत्रत्वेन, अपि तु विद्याकेन्द्रत्वेन वित्तकोषीयव्यवहारकेन्द्रत्वेन चापि सुविख्यातम् अस्ति ।

उडुपितः ४. कि. मी. दूरे नैर्ऋत्यदिशि मध्वाचार्यवर्यस्य जन्मस्थलम् उद्यावरम् अस्ति । तत्र मध्वाचार्यवर्यस्य विग्रहः प्रतिष्ठापितः अस्ति ।

*मूडबिदरेप्रदेशस्थः सहस्रस्तम्भालयः*



अड्डुपिनगरतः दक्षिणदिशि मूडबिदरे-कार्कळनामके उभे प्रसिद्धे जैनक्षेत्रे स्तः । १२मीटर्-औन्नत्येन युक्तस्य गोम्मटेश्वरस्य विग्रहस्य निमित्तं ख्यातम् अस्ति कार्कळक्षेत्रम् । एषः विग्रहः १४३२तमे क्रिस्ताब्दे प्रतिष्ठापितः । महाविग्रहाणां निर्माणे सिद्धहस्तस्य शिल्पिनः रञ्जाळगोपालशेणैवर्यस्य जन्मस्थलम् अस्ति कार्कळक्षेत्रम् । तेन निर्मिताः महाविग्रहाः न केवलं कर्णाटकराज्ये, अपि तु भारतस्य अन्यक्षेत्रेषु जपान्देशे चापि प्रतिष्ठापिताः सन्ति ।

मूडबिदरेक्षेत्रं 'जैनकाशी' इति निर्दिश्यते । अत्र अष्टादश जैनालयाः सन्ति । एतेषु त्रिभुवनतिलक-चूडामणिमन्दिरं सुविशालम् । एतत् एव मन्दिरं 'सहस्रस्तम्भालयः' इत्यपि निर्दिश्यते । अत्रत्येषु अखण्डशिलया निर्मितेषु स्तम्भेषु विविधैः आभरणैः अलङ्कृतानां तीर्थङ्कराणां विग्रहाः बाहुल्येन दृश्यन्ते ।

मूडबिदरेतः दक्षिणदिशि मङ्गलूरुनगरम् अस्ति । दशमे शतके प्रतिष्ठापितायाः मङ्गलादेव्याः नाम्नः कारणतः एतस्य नगरस्य नाम 'मङ्गलूरु' इति जातम् अस्ति । द्वितीये क्रिस्ताब्दे एव एतत् नौकास्थानत्वेन प्रसिद्धम् आसीत् । टिप्पूसुल्तानकाले एतत्



*कार्कळस्थः गोम्मटेशविग्रहः*



*नेत्रावती-गुरुपूरनद्योः सङ्गमे स्थितं मङ्गलूरुनगरम्*

प्रमुखनौकास्थानत्वेन अभिवृद्धिं प्राप्नोत् ।

कर्णाटकराज्ये उन्नताध्ययनकेन्द्रत्वेन, प्रमुखवाणिज्यकेन्द्रत्वेन, उद्योगबाहुल्य-केन्द्रत्वेन, प्रधाननौकास्थानत्वेन च मङ्गलूरुनगरं प्रख्यातम् अस्ति ।

मङ्गलूरु-मुम्बयीनगरयोः मध्ये कोङ्कणरेल्वेमार्गः इदानीं निर्मीयमाणः अस्ति । एतस्य दैर्घ्यं ७६० कि.मी. । यदि एषा योजना पूर्णा भविष्यति तर्हि मुम्बयीतः मङ्गलूरुनगरं प्रति आगन्तुम् १८ घण्टाः पर्याप्ताः भवन्ति । इदानीं तावत् ४१ घण्टाः अपेक्षिताः भवन्ति तस्यैव दूरस्य क्रमणार्थम् ।

मङ्गलूरुतः ८ कि.मी. दूरे दक्षिणभागे श्वेतसमुद्रतीरयुक्तत्वेन ख्यातम् 'उळ्ळाल'नगरम् अस्ति । १७ शतके राज्ञी अब्बक्कदेवी एतं प्रदेशं पालितवती आसीत् । सा यदा अधिकारसूत्रं गृहीतवती तदा, पूर्वजैः पोर्चुगीस्जनानां कृते यत् उपायनकरः दीयते स्म तत् स्थगितवती । तावदेव न, पोर्चुगीस्जनानां निषेधम् अपि तृणीकृत्य अरबदेशान् प्रति स्वस्य वाणिज्यनौकाः प्रेषितवती । एतेन नितरां क्रुद्धाः पोर्चुगीस्जनाः उळ्ळालस्य उपरि आक्रमणं कृतवन्तः । किन्तु एतस्मात् अब्बक्कदेवी धैर्यच्युता न जाता । तस्याः सैन्येन पोर्चुगीस्सैन्यस्य आक्रमणं धैर्येण सम्मुखीकृतम्, अल्पे एव काले तत् सैन्यं प्रतिप्रेषितं च ।

*पोर्चुगीसूजनैः सह प्रवृत्ते युद्धे*
*विजयं साधितवती राज्ञी अब्बक्कदेवी*





# अन्नदानमहत्त्वम्

हेमावतीनदीतीरे सिद्धपुरनामकः ग्रामः आसीत् । सः ग्रामः कृषिनिमित्तं प्रसिद्धः आसीत् । अन्यान्य-प्रदेशेभ्यः कर्मकराः तं ग्रामम् आगत्य कार्यं कुर्वन्ति स्म । तत्र प्रमुखं कारणं विजयः नाम कश्चित् दाता । विजयः तु महाधनिकः आसीत् । तत्र ये कर्मकराः कार्यं कुर्वन्ति स्म तेभ्यः कर्मकरेभ्यः विजयः निश्शुल्कम् अन्नदानं करोति स्म ।

सः सर्वदा कर्मकरान् वदति स्म - ''भवन्तः सर्वे पूर्णोदरं भोजनं कुर्वन्तु । भोजनार्थं धनं दातव्यं नास्ति । भवतां कृते भोजनस्य दानेन मम किमपि कष्टं न भवति'' इति ।

विजयः न केवलं कर्मकरेभ्यः अन्नदानं करोति स्म, अपि तु तं ग्रामं यः कोऽपि यात्रिकः आगच्छति चेदपि तस्मै अपि सन्तोषेण अन्नदानं करोति स्म ।

एकदा नीलकण्ठः नाम कश्चित् धनिकः उष्ट्रशकटेन प्रयाणं कुर्वन् सिद्धपुरग्रामं प्राप्तवान् । तेन गन्तव्यः ग्रामः दूरे अस्ति इति कारणतः सः तस्मिन् दिने सिद्धपुरे एव स्थितवान् ।

नीलकण्ठः शाकटिकं पृष्टवान् - ''अत्र भोजनालयः कुत्र अस्ति ?'' इति ।

तदा शाकटिकः उक्तवान् - ''स्वामिन् ! अत्र विजयः नाम अन्नदाता अस्ति । अतः अत्र भोजनालयस्य आवश्यकता का अस्ति ? वयम् अपि तस्य गृहम् एव गच्छाम'' इति ।

अनन्यगतिकः नीलकण्ठः विजयस्य गृहस्य पुरतः शकटतः अवतीर्णवान् । गृहस्य द्वारं पिहितम् आसीत् । अतः तत्रैव स्थिते आसन्दे उपविष्टवान् नीलकष्ठः ।

किञ्चित्कालानन्तरं विजयः द्वारम् उद्घाट्य यदा बहिः आगतवान् तदा अनुक्षणमेव नीलकण्ठः तम् उक्तवान् - ''मह्यं, शाकटिकाय च भोजनम् आवश्यकम् । भोजने व्यञ्जनं, पायसं, नक्रम् इत्यादिकं सर्वं भवेत् । व्ययनिमित्तं



भवान् चिन्तां मा करोतु । धनं तु अहं दास्यामि । मम स्तरानुगुणं भोजनं भवेत्'' इति ।

नीलकण्ठस्य वचनं श्रुतवतः विजयस्य कोपः आगतः । तथापि सः तम् अप्रदर्शयन् - ''मम गृहं प्रति ये अतिथयः आगच्छन्ति ते सर्वे मम दृष्ट्या समानाः एव । धनिकाः निर्धनाः च समानपङ्क्तौ उपविश्य परब्रह्म-स्वरूपस्य अन्नस्य भोजनं कुर्वन्ति चेत् तदेव मम सन्तोषाय । अन्येभ्यः यत् भोजनं दीयते तदेव भवते दीयते । बुभुक्षा तु सर्वेषां समाना एव । तथापि भवन्तः तस्याः स्तरभेदं कल्पयन्ति इति तु मयि आश्चर्यं जनयति । मम तु महती सम्पत्तिः अस्ति । अतः अन्नस्य विक्रयणं न करोमि । अत्र सर्वे समानपङ्क्तौ उपविश्य भोजनं कुर्वन्तः स्तरभेदं विस्मरन्ति । भवद्भ्याम् अपि तथैव कृतं चेत् वरं भवेत् । आगच्छन्तु, भोजनं कुर्वन्तु तावत्'' इति नीलकण्ठम् उक्तवान् ।

विजयस्य धर्मबुद्धिं, दानगुणं च ज्ञातवान् नीलकण्ठः आत्मनः अहङ्कारम् अवगत्य खेदम् अनुभूतवान् । ''अस्मिन् ग्रामे बुभुक्षितेभ्यः भोजनं यच्छन् भवान् एव श्रेष्ठः । भवतः पुरतः अहम् अल्पः एव । कृपया क्षन्तव्यः अहम्'' इति वदन् क्षमां प्रार्थितवान्, ततः आतृप्ति भोजनं कृतवान् च । भोजनसमये सः शाकटिकम् उक्तवान् - 'किञ्चित्कालं यावत् मम धनिकत्वं विस्मरतु भवान्'' इति ।

अनन्तरदिने प्रातःकाले नीलकण्ठः विजयाय कृतज्ञतां समर्प्य प्रयाणम् अग्रे अनुवर्तितवान् ।

शकटं ग्रामं क्रान्त्वा उन्नते पर्वतप्रदेशे यदा गच्छत् आसीत् तदा शाकटिकस्य मनसि दुर्भावना उत्पन्ना । सः शकटं स्थगयित्वा नीलकण्ठम् उक्तवान् - ''भवान् शकटतः अवतरतु'' इति । एतस्य कारणम् अजानन् नीलकण्ठः यदा शकटतः अवतीर्णवान् तदा शाकटिकः तं क्रूरदृष्ट्या पश्यन् - ''अहं धनिकत्वप्राप्त्यर्थं सुलभं मार्गं ज्ञातवान् अस्मि । इतःपरं कस्यापि कर्मकरः न अहम् । भवतः समीपे विद्यमानं धनं सर्वं मह्यं ददातु'' इति कठोरस्वरेण आदिष्टवान् ।

तदा नीलकण्ठः शान्तस्वरेण - ''अन्येभ्यः अपहृतेन धनेन किमपि साधयितुं शक्येत इति तु भवतः भ्रमः एव । गृहगमनानन्तरं प्रामाणिकतया सम्पत्तेः सम्पादनार्थं यावत् आवश्यकं तावत् मूलधनम् भवते दास्यामि'' इति

शाकटिकम् उक्तवान् ।

परन्तु दुराशापीडितः शाकटिकः एतत् सर्वम् अनङ्गीकृत्य नीलकण्ठस्य समीपे विद्यमानं धनं सर्वं बलात् स्वीकृत्य वेगेन प्रवहन्त्यां नद्यां तं पातयित्वा ततः पलायितवान् ।

कानिचन दिनानि प्रयाणं कृत्वा शाकटिकः रामनगरनामकं ग्रामं प्राप्तवान् । तत्र सः चोरितेन धनेन वाणिज्यम् आरब्धवान् । केषुचित् दिनेषु एव शाकटिकः धनिकः सन् ग्रामे गण्यव्यक्तिषु अन्यतमः अभवत् । परन्तु गच्छता कालेन शाकटिकस्य मनसि पापभीतिः आरब्धा । अतः प्रतिदिनं सः निर्धनयोः कृते अन्नस्य दानस्य नियमम् अभ्यस्तवान् ।

एवं सति मृतः नीलकण्ठः पिशाचः अभवत् । शाकटिकस्य उपरि प्रतीकारः करणीयः इति सः निश्चितवान् । पिशाचः रामनगरं प्राप्य तत्र महता वैभवेन महति प्रासादे वसन्तं शाकटिकं दृष्ट्वा कुपितः अभवत् ।

यदा पिशाचः तं ग्रामम् आगतः तदा शाकटिकः अमूल्यं वस्त्रं धृत्वा भूस्वामिनः सभां गत्वा एकस्मिन् उन्नतासने उपविष्टवान् आसीत् । तस्मिन् समये एव काकतालीयम् इव तत्र उपविष्टाः पिशाचानां विषये चर्चाम् आरब्धवन्तः । ''पिशाचः अस्ति उत नास्ति'' इत्येतस्मिन् विषये वादः प्रतिवादः च प्रवृत्तः । 'एषः योग्यः समयः' इति विचिन्त्य पिशाचः शाकटिकस्य देहं प्रविष्टवान् ।

तदा शाकटिके महत् परिवर्तनं जातम् । सः उत्थाय - ''पश्यन्तु ! पिशाचः सन्



अहम् अत्र आगतवान् अस्मि । भवत्सु शक्तिः अस्ति चेत् मत्तः एतं रक्षन्तु'' इति उच्चस्वरेण वदन् इतस्ततः भ्रमणं कृतवान् ।

शाकटिकः विनोदं कुर्वन् अस्ति इति आदौ सर्वे चिन्तितवन्तः आसन् । किन्तु किञ्चित्कालानन्तरं वस्तुस्थितिं ज्ञात्वा ते सर्वे भीताः अभवन् । अनुक्षणम् आस्थानस्य भूतवैद्याय वार्तां प्रेषितवान् भूस्वामी ।

भूतवैद्यः आगत्य मन्त्रोच्चारणं कृत्वा पिशाचेन सह सम्भाषणं कृत्वा शाकटिकेन कृतम् अन्याय्यं ज्ञातवान् । सः पिशाचम् उक्तवान् - ''भोः पिशाच ! प्रवृत्तं सर्वं विस्मरतु । अहम् एतं शाकटिकं यथायोग्यं दण्डयिष्यामि । भवान् एतं विहाय गच्छतु'' इति ।

तदा पिशाचः उच्चैः हसन् - ''एतस्य दुष्टस्य शरीरम् अहं न इच्छामि । अतः

अहम् इतः गन्तुं सिद्धः अस्मि एव । विजयेन एतस्मै कृतस्य अन्नदानस्य फलं यदि मह्यं दीयते तर्हि एतस्मात् पिशाचरूपतः मम मुक्तिः भविष्यति'' इति उक्तवान् ।

ततः सिद्धपुरतः विजयः रामनगरम् आनीतः । तं दृष्टवान् पिशाचः विनयेन नमस्कुर्वन् - ''स्वामिन् ! अयोग्याय अन्नदानं क्रियते चेदपि तद् महत् दानम् इति भवता इदानीं निरूपणीयम् अस्ति । एतस्मै शाकटिकाय कृतस्य अन्नदानस्य फलं मह्यं दत्त्वा मां पिशाचरूपतः विमोचयतु'' इति प्रार्थितवान् ।

तदा विजयः पिशाचम् उक्तवान् - ''अहम् अन्नदानस्य महत्त्वं न जानामि । धनिकः, निर्धनः, चोरः, भिक्षुकः, यः कोऽपि वा मम गृहम् आगच्छति चेत् तस्मै भोजनस्य व्यवस्थापनं मम कर्तव्यम् । फलापेक्षां विना अन्नदानम् अहं कृतवान् । यदि अन्नदाने महत्त्वम् अस्ति तर्हि पिशाचरूपतः भवतः मुक्तिः भवति'' इति ।

तदा पिशाचः विनयेन - ''महानुभाव ! भवतः अन्नदानस्य पुण्येन पिशाचस्य मम मुक्तिः प्राप्ता अस्ति । भवतः अन्नदानस्य महत्त्वं लोकः जानातु इति कारणतः अहम् अत्र आगतवान् । वाममार्गेण धनिकत्वं प्राप्तवतः एतस्य देहं प्रविष्टवान् आसम् । मम कार्यं समाप्तम् अस्ति । अतः इदानीम् एव अहम् इतः निर्गच्छामि'' इति उक्तवान् ।

यदा पिशाचः शाकटिकस्य देहतः दूरं गतः, तदा शाकटिकः प्रज्ञाशून्यः अभवत् । किञ्चित्कालानन्तरं सचेतनतां प्राप्य उत्थितः सः तत्रत्यानां मुखात् प्रवृत्तं सर्वं श्रुत्वा पश्चात्तापम् अनुभूतवान् । अनन्तरं सम्पूर्णं स्वधनं भूस्वामिने दत्त्वा विजयेन सह सिद्धपुरं गत्वा अन्नदाने साहाय्यं कर्तुम् उद्युक्तः अभवत् ।

ये ये तत्र भोजनार्थम् अगच्छन्ति स्म तान् सर्वान् शाकटिकः उपदिशति स्म - ''भगवता यावत् दत्तं तस्यैव कश्चित् भागः अन्नदानादीनां निमित्तं व्ययीकरणीयः, परिश्रमपूर्वकं धनं सम्पादनीयं च । तेन एव अस्माकं जीवनस्य सार्थकता भविष्यति'' इति ।



चन्दमामायाः



# सुवर्णसमयः

## दश कपालाः

कोसलराज्ये वृष्ट्यभावात् प्राप्तस्य क्षामस्य निवारणार्थं राजा आदित्यः कपालमुनेः साहाय्यं प्रार्थितवान् ।














# सुवर्ण-समयस्य प्रश्नावली



**1** भगवान् बुद्धः कोसलराज्यमार्गेण अरण्ये यदा गच्छन् आसीत् तदा अङ्गुलिमालः नाम क्रूरः चोरः तस्य मार्गम् अवरुद्धवान् । 'बुद्धं मारयित्वा तस्य अङ्गुलिः स्वहारे योजनीया' इति तस्य चिन्तनम् आसीत् । किन्तु बुद्धः तदीयं दोषम् अवगमय्य सन्मार्गम् उपदिश्य तं संन्यासिनं कृतवान् ।
अङ्गुलिमालः इति तु अनन्तरकालीनं नाम तस्य चोरस्य वास्तविकं नाम किम् ?



**2** ऐदम्प्राथम्येन आस्ट्रेलिया गताः युरोपीयाः आत्मना सह कञ्चन प्राणिनम् अपि नीतवन्तः आसन् । स च प्राणी इदानीं तत्र पीडामूलं जातम् अस्ति । कृषिकाः मेष-धेन्वादिनिमित्तं यम् आहारं वर्धयन्ति तम् एव नाशयन् अस्ति स च प्राणी । ततः आहारतृणस्य रक्षणार्थं कृषिकाः क्षेत्रं परितः दीर्घां वृतिं निर्मान्ति ।
सः आहारनाशकः प्राणी कः ?

**3** लण्डन्नगरे 'विक्टोरिया & अल्बर्ट् म्यूसियं'-नामके वस्तुसङ्ग्रहालये वास्तविक प्रमाणकः कश्चन काष्ठमयः व्याघ्रः अस्ति आंग्ल-सैनिकस्य उपरि स्थित्वा तं मारयन् इव दृश्यते सः । पार्श्वस्थं साधनं प्रवर्तितं चेत् व्याघ्रः गर्जति । सैनिकश्च वेदनया क्रन्दन् एकम् हस्तम् उन्नयति । एषा व्याघ्रपाञ्चालिका कस्य ?



उत्पीटिकायाः अन्तःपेटिकायां षट् कृष्णवर्णीयाः, षट् श्वेतवर्णीयाः च पादकोषाः सन्ति । विद्युतः अभावतः प्रकोष्ठः अन्धकारमयः अस्ति । श्वेतं कृष्णं वा एकं पादकोषयुगलं स्वीकरणीयं चेत् कति पादकोषाः स्वीकरणीयाः भवेयुः ?





सोमस्य नौका यदा तीरं प्राप्तवती तदा तत्र एकः गजः दृष्टः । गजः तस्य मित्रस्य एव । 'गजस्य भारः कः ?' इति पृष्टवान् सोमः । ''भारः कियान् इति मया न ज्ञायते । यदि भवान् ज्ञात्वा वदेत् तर्हि एतस्य उपरि उपविश्य भवान् सकृत् विहारं कर्तुम् अर्हति'' इति उक्तवान् सः गजस्वामी । सोमसमीपे तावत् पञ्चाशत्-किलोमितं भारं तोलयितुं समर्था तुला आसीत् । एवं स्थिते सोमः गजस्य भारं कथं ज्ञातवान् ?



कश्चन लोहकारः अष्ट अयोगोलकानि निर्मितवान् । तानि आकारेण समानानि चेदपि एकस्य भारः किञ्चित् न्यूनः आसीत् । यदि भवद्भ्यः तुला दीयेत तर्हि भवन्तः तस्य न्यूनभारयुक्तस्य अयोगोलकस्य भारं कथं ज्ञास्यन्ति ?



प्राचीने काले ईजिप्टदेशे शव-निखननसमये शवस्य हस्ते रजत-कांस्यमयानि नाणकानि स्थाप्यन्ते स्म । एतत् किमर्थम् ?

# शीघ्रसाध्यं शुभाशयपत्रम्




१२ सें.मी. X ८ सें.मी. परिमितं दृढपत्रं यथा चित्रे दर्शितं तथा कर्तयन्तु भवन्तः ।




६ सें.मी. X ४ सें.मी. आकारकम् अन्यत् एकं दृढपत्रं कर्तयित्वा तत् टेप्साहाय्येन चित्रे यथा दर्शितं तथा योजयन्तु ।




ततः दृढपत्रस्य वामार्धं मध्यपत्रं च रब्बर्बन्धेन योजयन्तु । रब्बर्बन्धः अतिदृढः अतिशिथिलः वा मा भवतु ।




रब्बर्बन्धस्थलं, कर्तितस्थलं च विहाय खण्डद्वये कागदस्य लेपनं कुर्वन्तु । तदुपरि शुभाशयं लिखन्तु । इदानीं यत् सिद्धं तस्य नाम 'स्नापर्' इति ।




तदपेक्षया विशालम् अन्यत् शुभाशयपत्रं सज्जीकृत्य तस्य अन्तः 'स्नापर्' लेपयन्तु ।




ततः स्नापर्मध्यपत्रं दक्षिणभागेन संलग्नं यथा स्यात् तथा कृत्वा शुभाशयपत्रं पिधाय तत् पिहितपत्रे स्थापयन्तु । अनन्तरं तत् मित्रेभ्यः प्रेषयन्तु । एतत् प्राप्य मित्रं साश्चर्यम् आनन्दम् अनुभवति इत्यत्र नास्ति सन्देहः ।






## 'व्यान्' यानस्य चित्रं रच्यताम्

त्रीणि सरलसोपानानि अवलम्ब्य









# महाभारतम्

दुश्शासनस्य प्रेरणया दुर्योधनः पितुः समीपं गत्वा उक्तवान् - ''द्यूते अहं सर्वं नाशितवान् । पाण्डवानां दैवबलं सैन्यबलं च अस्ति । यदि युद्धं प्रवर्तेत तर्हि ते अस्मान् अवश्यं नाशयेयुः । अतः भवान् पुनः अपि तान् द्यूतार्थम् आह्वयतु । द्यूते तान् पराजित्य द्वादशवर्षपर्यन्तं वनवास-निमित्तं प्रेषयिष्यामः । वनवासतः तेषां प्रत्यागमनात् पूर्वं प्रपञ्चे विद्यमानान् सर्वान् राज्ञः अस्माकं पक्षे योजयिष्यामः । अनन्तरं पाण्डवैः सह युद्धं कृत्वा जयं प्राप्स्यामः'' इति ।

धृतराष्ट्रः एतत् सर्वम् अङ्गीकृतवान् । परन्तु भीष्मः, द्रोणः इत्यादयः विरोधं प्रकटितवन्तः ।

गान्धारी तु प्रबलं विरोधं प्रकटयन्ती - ''एतेन कौरवकुलम् एव नष्टं भविष्यति । अतः एतत् द्यूतं सर्वथा मास्तु एव'' इति उक्तवती ।

तदा धृतराष्ट्रः पत्नीम् उक्तवान् - ''कौरवकुलं नष्टं भविष्यति चेदपि चिन्ता नास्ति । मम पुत्रस्य अपेक्षायाः अनुगुणं द्यूतं तु भवेत् एव'' इति ।

अनन्तरं सः द्यूतनिमित्तं पाण्डवानाम् आह्वानार्थं प्रातिकामिनं प्रेषितवान् ।

प्रातिकामी धर्मराजस्य समीपं गत्वा विनयेन तं नमस्कृत्य धृतराष्ट्रस्य आज्ञां यथावत् निवेदितवान् ।

'पुनः द्यूततः अधिकः अपायः भवेत्' इति जानन् अपि, शकुनिप्रभृतयः एव इदानीम् अपि द्यूते भागं वहन्ति इति अवगच्छन् अपि, पूर्वतनद्यूतस्य विपरीतं

'वनवासं प्रति पाण्डवानां गमनम्'



परिणामं स्मरन् अपि धर्मराजः मायया वशीभूतः सन् स्वभ्रातृभिः सह द्यूतनिमित्तं हस्तिनापुरम् आगतवान् ।

द्यूतक्रीडातः पूर्वं शकुनिः क्रीडायाः नियमं धर्मराजम् उक्तवान् - ''इदानीं ये द्यूतक्रीडायां पराजयं प्राप्नुवन्ति तैः वल्कलं धृत्वा द्वादशवर्षपर्यन्तं वनवासः करणीयः, वर्षं यावत् अज्ञातवासः करणीयः च । अज्ञातवासकाले यदि ते अन्यैः अभिज्ञाताः भविष्यन्ति तर्हि पुनः अपि तैः द्वादश वर्षाणि यावत् वनवासः, वर्षं यावत् अज्ञातवासः च करणीयः । त्रयोदश-वर्षानन्तरं तैः किमपि राज्यं परिपालयितुं शक्यते'' इति ।

शकुनेः एतं नियमं श्रुत्वा सभायां स्थिताः सर्वे दिग्भ्रान्ताः ।

''बुद्धिहीनः धृतराष्ट्रः पुत्रस्य वचनम् एव पालयति । सभायां विद्यमानाः ज्येष्ठाः किमर्थं मौनम् उपविष्टवन्तः सन्ति इति तु न ज्ञायते'' इति केचन सक्रोधं परस्परम् उक्तवन्तः ।

धर्मराजः अपि शकुनिम् उक्तवान् - ''राजधर्मम् अनुसरामि इति प्रतिज्ञां स्वीकृतवता मया कुतन्त्रयुक्ते द्यूते अपि भागः वोढव्यः एव । अतः अनन्य-गतिकतया अहम् एतस्मिन् द्यूते भागं वहामि'' इति ।

शकुनिः क्रीडाम् आरब्धवान् । क्रीडा यथापूर्वं वञ्चनापूर्णा एव आसीत् । धर्मराजः तु न्यायमार्गं पूर्णरूपेण अनुसृतवान् । अतः धर्मराजः क्रीडायां पराजितः । क्रीडायाः नियमानुसारं धर्मराजः, तस्य सहोदराः, द्रौपदी च वल्कलं धृत्वा, हरिणचर्म स्वीकृत्य वनवासं प्रति गन्तुं सिद्धाः अभवन् ।

तान् सर्वान् दृष्ट्वा दुश्शासनः - ''अद्यप्रभृति पाण्डवानां जीवनं कष्टमयं भविष्यति । एतत् तु महतः सन्तोषस्य विषयः अस्माकम् । इदानीं दुर्योधनस्य आतङ्कक्षणाः अपगताः । ऐश्वर्यमदेन अस्मान् निन्दितवतां पाण्डवानां योग्यं दण्डनं जातम् । इतःपरं तैः अरण्ये मृगैः इव जीवनं करणीयम् । अस्मादृशः धनिकः इतःपरं लोके कोऽपि न भविष्यति'' इति उक्तवान् ।

पुनः अहङ्कारेण सः द्रौपदीम् उक्तवान् - ''अये पाञ्चालि ! निर्धनैः पाण्डवैः सह वसन्ती भवती किमर्थं कष्टम् अनुभवति ? कौरवेषु अस्मासु यङ्कञ्चित् परिणीय राजभवने सकलसुखम् अनुभवतु तावत्'' इति ।

तस्य तादृशवचनानि श्रुत्वा भीमः कोपेन दुश्शासनम् उक्तवान् - ''भोः पापिन् ! शकुनेः कुतन्त्रम् अवलम्ब्य जयं प्राप्य भवान् एवं गर्वेण वदन् अस्ति । युद्धरङ्गे भवतः अस्थिभञ्जनसमये भवान् यत् वदिष्यति तत् सर्वे श्रोष्यन्ति । न केवलं भवन्तम्, अपि तु भवन्तम् आश्रितवतः सर्वान् अपि यमलोकं प्रेषयिष्यामि । एषा मम प्रतिज्ञा'' इति ।

अनन्तरं भीमः दुर्योधनम् उद्दिश्य क्रोधेन उक्तवान् - ''भोः दुष्ट ! यदा युद्धे भवतः मारणेन अन्तरङ्गतापं शमयिष्यामि तदा एव मम आत्मा तृप्तः भविष्यति'' इति ।

तदनन्तरं द्यूतस्थानतः पाण्डवानां गमनसमये भीमः पृष्ठतः परिवृत्य सभायां विद्यमानान् उक्तवान् - ''भवन्तः सर्वे स्मरन्तु । एतं दुर्योधनम् अहं युद्धे क्रूररीत्या मारयिष्यामि । एतस्य मित्रं कर्णम् अर्जुनः, एतं शकुनिं सहदेवः च मारयिष्यतः । एतस्य दुष्टचतुष्टयस्य मरणम् अस्माकं हस्ते अस्ति। एतत् निवारयितुं केनापि न शक्यते'' इति ।

तदा भीमस्य वचनानि निवारयन् अर्जुनः उक्तवान् - ''केवलेन वृथावचनेन इदानीं किं वा प्रयोजनम् ? चतुर्दशवर्षानन्तरं करणीयस्य कार्यस्य निमित्तम् इदानीम् एव नान्दीकथनं किमर्थम् ? इदानीं भवान् शान्तः भवतु'' इति ।

सहदेवः शकुनिम् उक्तवान् - ''भोः नीच ! द्यूते भवान् कुतन्त्रं कृतवान् । किन्तु किं तेन ? यदि सामर्थ्यं स्यात् तर्हि युद्धभूमौ स्वस्य पराक्रमं दर्शयतु । भीमेन यथा उक्तं तथा एव भवन्तम् अहं निश्चयेन



मारयिष्यामि । ततः पूर्वं भवान् स्वस्य सर्वाणि कार्याणि समाप्य मरणं प्राप्तुं सिद्धः भवतु'' इति ।

नकुलः कोपेन - ''एतस्यां सभायां द्रौपद्याः अपमाननं कृतवतः भवतः सर्वान् निश्चयेन मारयिष्यामः । भवन्तः भाविनः मारणहोमस्य आहुतयः भविष्यन्ति'' इति उक्तवान् ।

एवं पाण्डवेषु एकैकः अपि प्रतिज्ञां कृतवान् । धृतराष्ट्रः, भीष्मः, बाह्लीकः, कृपः, द्रोणः, अश्वत्थामा, विदुरः, सञ्जयः इत्यादिनां ज्येष्ठानां समीपं गत्वा आशीर्वादं प्राप्तवन्तः पाण्डवाः ।

दुष्टचतुष्टयतः भीताः तत्रत्याः सर्वे सर्वं पश्यन्तः अपि मौनं स्थितवन्तः आसन् । परन्तु विदुरः धैर्येण उत्थाय धर्मराजम् उक्तवान् - ''शकुनेः कुतन्त्रस्य कारणतः प्राप्तः पराजयः वस्तुतः पराजयत्वेन न

परिगणनीयः । भवता सह रत्नसदृशाः अनुजाः, चतुरा द्रौपदी, ज्ञानी धौम्यः च सन्ति । अतः भवतः किमपि कष्टं न भविष्यति । भवत्सु सहोदरेषु यत् ऐकमत्यम् अस्ति तत्र भेदं जनयितुं वा, भवतः पराजेतुं वा केनापि न शक्यते । भवतां माता ज्येष्ठा अस्ति । अतः सा भवद्भिः सह अरण्यम् आगन्तुं न शक्नुयात् । ताम् अहं पालयिष्यामि । भवतां शुभं भवतु'' इति ।

तदनन्तरं धर्मराजः विदुरम् उक्तवान् - ''भवान् मम पिता इव, गुरुः इव च । अस्माकं हितम् एव भवान् इच्छति । भवतः प्रत्येकं वचनम् अपि अक्षरशः पालयिष्यामः । जातस्य अन्याय्यस्य विषये भवन्तं किमपि न वदामि अहम् । सर्वदा 'सत्यम् एव जयते' खलु । परन्तु तथा भवितुं किञ्चित् कालावकाशः आवश्यकः । भवान् तु ज्ञानी अस्ति । अतः मया विस्तरेण वक्तव्यं किमपि नास्ति । परन्तु भवतः आदेशः एव अस्माकं कर्तव्यम् इति अहं भावयामि'' इति ।

अन्तःपुरे विद्यमानां कुन्तीं, गान्धारीं च द्रौपदी नमस्कृतवती । स्वसखीः आलिङ्ग्य रुदती - ''वनवासं गच्छामि'' इति उक्तवती च ।

तदा कुन्ती द्रौपदीम् उक्तवती -''पतिभिः सह पत्न्याः गमनम् सहजः धर्मः अस्ति । कस्यचित् पूर्वजन्मनः कर्मणः फलेन प्राप्तानि कष्टानि मौनं सोढव्यानि भवन्ति । तानि सम्मुखीकर्तुम् आत्मस्थैर्यम् आवश्यकम् । पुण्यवतां तु दैवबलं सर्वदा भवति एव । अतः भवती रोदनं मा करोतु । यदि भवती कोपेन कौरवान् अद्रक्ष्यत् तर्हि ते भस्मीभूताः अभविष्यन् । भवत्यां मम एकं निवेदनम् अस्ति यत् एतेषु पञ्चजनेषु सहदेवः बाल्यतः एव सुकोमलः अस्ति । तं भवती श्रद्धया पश्यतु'' इति ।

अनन्तरं उन्मोचितवेणीका द्रौपदी उच्चैः रुदती अन्तःपुरतः बहिः आगतवती । कुन्ती



अपि तया सह स्वपुत्रसमीपम् आगतवती । ते पुत्राः मुनिवेषं धृत्वा वनं गन्तुं सिद्धाः आसन् ।

कुन्ती पुत्रान् दृष्ट्वा रुदती उक्तवती - "यद्यपि सर्वेषु कालेषु भवद्भिः धर्मः श्रद्धया पालितः । तथापि भवद्भिः न जाने, किमर्थं वनवासः प्राप्तः इति । भवत्सु देवस्य अल्पा अपि करुणा न स्यात् । अथवा मम उदरात् जन्मप्राप्तिः एव एतस्य कारणं स्यात् । भवन्तः अरण्ये कथं वासं कुर्युः ? एतादृशं दुःस्थितिं द्रष्टुम् असमर्थौ भवतां पिता, माता माद्री च अदृष्टवन्तौ । अहं तु कस्यचित् पापस्य कारणतः एतादृशं कष्टं द्रष्टुं जीवन्ती अस्मि । एतावत्पर्यन्तं भवतां सर्वेषु कष्टेषु अहम् अपि सहभागिनी आसम् । परन्तु इदानीं माम् एकाकिनीम् एव विहाय गन्तुं सन्नाहं कृतवन्तः सन्ति खलु भवन्तः ? किम् एतत् उचितम् ? माम् अपि आत्मना सह नयन्तु भवन्तः । एतादृशकष्टकाले अपि अनाथरक्षकः कृष्णः भवतां किमपि साहाय्यं न कुर्यात् वा ?" इति ।

अनन्तरं सा सहदेवम् उद्दिश्य - "पुत्र ! भवान् वनवासं प्रति मा गच्छतु । यदि भवान् मम समीपे भवति तर्हि मम सर्वेऽपि पुत्राः मया सह सन्ति इति मम भासते" इति वदन्ती अश्रूणि स्रावितवती ।

विदुरः तां महता कष्टेन सान्त्वयन् स्वगृहं नीतवान् । पाण्डवाः मातरं नमस्कृत्य वनवासार्थं प्रस्थिताः । द्रौपदी स्वकेशान् विकीर्य तैः सह प्रस्थिता । धर्मराजः मुखं वस्त्रेण बद्धवान् । भीमः स्वस्य उरःस्थलं विशालीकृत्य गतवान् । अर्जुनः सिकताः पातयन्, नकुलः स्वशरीरं भस्मना लेपयित्वा, सहदेवः समग्रं शरीरं मृत्तिकया लेपयित्वा च प्रस्थितवन्तः । धौम्यः तेषां पुरतः रौद्रस्वरेण सामगानं कुर्वन् गतवान् ।

धृतराष्ट्रः विदुरम् आहूय - "पाण्डवाः वनवासं प्रति गमनसमये कथं व्यवहारं कृतवन्तः ?" इति पृष्टवान् ।





पाण्डवेषु एकैकः अपि कथं व्यवहृतवान् इति विस्तरेण विवृतवान् विदुरः ।

''ते किमर्थं तथा व्यवहृतवन्तः ?'' इति धृतराष्ट्रः विदुरं पृष्टवान् ।

''भवतः पुत्रैः कृतेन अन्याय्येन कुपितः धर्मराजः 'मम दृष्ट्याः कारणतः प्रजाः भस्मीभूताः न भवेयुः' इति उद्देशेन मुखं वस्त्रेण बद्धवान् आसीत् । भीमः लोकस्य पुरतः उरः विशालीकृत्य प्रदर्शितवान् । सिकताः इव बाणान् क्षिप्त्वा शत्रुसंहारं करिष्यामि इत्येतं भावम् अर्जुनः ज्ञापितवान् । 'मम सौन्दर्यं दृष्ट्वा प्रजाः इतोऽपि दुःखिताः न भवेयुः' इति चिन्तयन् सहदेवः शरीरं भस्मना लेपितवान् । स्वदुःखं जनाः न जानीयुः इति उद्देशेन नकुलः मृत्तिकया शरीरं लेपितवान् । द्रौपदी आर्द्रां शाटिकां धृत्वा, केशान् विकीर्य - 'षोडषवर्षानन्तरं भवतः स्नुषाः अपि विधवाः भूत्वा एवमेव रोदनं करिष्यन्ति' इति दर्शितवती । धौम्यः हस्तेन दर्भान् गृहीत्वा - 'अग्रिमे युद्धे ये मृताः भविष्यन्ति तेषाम् उत्तरक्रियां करिष्यामि' इति ज्ञापयितुं रौद्रसामगानं कृतवान् । भोः राजन् ! भवतः दुर्बुद्धिकारणतः कौरवाणाम् आपत्तिः आगमिष्यति'' इति विदुरः उक्तवान् ।

विदुरस्य, पाण्डवानां च गमनानन्तरं दुर्योधनः, दुश्शासनः, कर्णः, शकुनिः च द्रोणस्य समीपं गत्वा - ''महानुभाव ! पाण्डवैः यानि राज्यानि जितानि तानि परिपालयितुं भवान् एव अर्हः । अतः भवता तानि पालनीयानि इति प्रार्थयामः वयम्'' इति उक्तवन्तः ।

एतत् वचनं श्रुतवान् द्रोणः - ''पाण्डवान् पराजेतुं केनापि न शक्यते । सत्यव्रतेषु पाण्डवेषु मम विशेषाभिमानः अस्ति । तथापि अहम् आश्रयदातॄन् भवतः सर्वान् त्यक्तुं न अर्हामि । पाण्डवाः नियमानुसारम् अवधिं समाप्य युद्धार्थम् आगमिष्यन्ति एव । मया पराजितः द्रुपदः महायज्ञं कृत्वा मां मारयितुं पुत्रं प्राप्तवान् अस्ति । धृष्टद्युम्नः द्रौपद्याः विवाहकारणतः पाण्डवानां सख्यं सम्पादितवान् । अत्र कृष्णस्य अपि सहकारः अस्ति । अर्जुनस्य समानः लोके अन्यः कोऽपि नास्ति । मम मरणं तु धृष्टद्युम्नेन एव करिष्यते इति सर्वे जानन्ति एव । अत्र तु भवन्तः एव कारणम् । मम तु भवतां राज्यं, सुखं किमपि न आवश्यकम् । भवन्तः इतःपरं वा यदि स्वहितम् इच्छन्ति तर्हि अन्येषां हितं कुर्वन्तः धर्मेण व्यवहरन्तु । पद्मपत्रस्थं

जलम् इव तरलं सुखम् एव अपेक्षितं चेत् अग्रिमेषु त्रयोदशसु वर्षेषु निश्चिन्ततया सुखसागरे एव लीनाः भवन्तु । अनन्तरं तु कौरवकुलस्य नाशः निश्चितः एव'' इति उक्तवान् ।

एतानि वचनानि श्रुतवान् धृतराष्ट्रः भयेन विदुरम् उद्दिश्य - ''आर्य विदुर ! द्रोणाचार्यस्य वचनं युक्तम् अस्ति । भवान् इदानीम् एव अरण्यं गत्वा पाण्डवान् आनयतु । यदि ते आगमनं सर्वथा निराकरिष्यन्ति तर्हि 'सम्माननं स्वीकृत्य वा गच्छन्तु' इति प्रार्थयतु'' इति वदन् दीर्घं निःश्वसितवान् ।

तदा सञ्जयः धृतराष्ट्रम् उक्तवान् - ''अये राजन् ! एतत् राज्यं समग्रं पाण्डवैः एव जितम् । परन्तु तेषु कृतज्ञताम् अप्रकटय्य पुत्रस्य वचनं पालयन् कुतन्त्रेण तान् अरण्यं प्रेषितवान् भवान् । एतादृशम् अन्यत् किं किं करणीयम् इत्यस्ति भवतः विचारः ?'' इति ।

''आर्य ! अलम् उपहासवचनैः । व्यथितं मां कटुवचनैः पुनरपि मा पीडयतु कृपया । ज्ञानवताम् अतिरथानां पाण्डवानां शत्रुत्वं यदि वर्धेत तर्हि अग्रे का गतिः भवेत् इति चिन्ताक्रान्तम् अस्ति मम अन्तरङ्गम्'' इति उक्तवान् धृतराष्ट्रः ।

''एतत् शत्रुत्वं भवान् एव वर्धितवान् । ज्येष्ठस्य भीष्मस्य, गुरोः द्रोणस्य, मन्त्रिणः विदुरस्य च हितवचनं भवान् न श्रुतवान् । भवतः पुत्रः अपि बुद्धिहीनः । सः अपि प्रातिकामिनं प्रेषयित्वा एकवस्त्रधारिणीं द्रौपदीं सभाम् आहूय अपमानितवान् । तस्याः शापस्य कारणतः भवतः कुलस्य नाशः भविष्यति एव । 'विनाशकाले विपरीतबुद्धिः' इति वचनं श्रूयते लोके । यदा विनाशकालः सन्निहितः भवति तदा देवताः बुद्धिं नाशयन्ति एव । परन्तु सर्वदा न्यायस्य एव जयः भवति'' इति सञ्जयः उक्तवान् ।

''सत्यम् ! पुत्रव्यामोहकारणतः यस्य कस्यापि वचनम् अश्रुत्वा अहं, पुत्रेण यथा उक्तं तथैव आचरितवान् । इदानीं तु कालः अतीतः । अतः गतस्य विषये चिन्तनेन न किमपि प्रयोजनम् इदानीम् । सः भगवान् एव अस्मान् रक्षेत्'' इति खेदेन उक्तवान् धृतराष्ट्रः । - (अनुवर्तते)



# 'कारञ्'पदवाच्याः वृक्षाः

मुम्बयीसमीपे 'करञ्जिया'नामकः द्वीपः अस्ति । तत्र आधिक्येन ''कारञ्'' इति मराठीभाषया निर्दिश्यमानाः वृक्षाः दृश्यन्ते स्म । अतः तस्य द्वीपस्य नाम 'करञ्जिया' इत्येव जातम् अस्ति । हिन्दीभाषया गुजरातीभाषया च एषः वृक्षः 'कारञ्' इति निर्दिश्यते । बङ्गालीभाषया 'काञ्जी' इति उच्यते । तमिळुभाषया 'पोङ्गं' इति, 'पुङ्गम्' इति च निर्दिश्यते । मलयाळभाषया एषः 'पुङ्गु' इति निर्दीश्यते । वृक्षशास्त्रीयाः एतं वृक्षं 'पोङ्गमया 'पिन्नाळा' इति नाम्ना निर्दिशन्ति । मलयाळभाषायाम् एतस्य 'उन्ने' इत्यपि नामान्तरं दृश्यते ।

एते वृक्षाः समुद्रतीरप्रदेशे कुल्याम् उभयतः वा वर्धन्ते । एतस्य विस्तृताः शाखाः किरीटायन्ते । एतस्य वृक्षस्य त्वक् रूक्षः भवति । आवर्षम् एतज्जातीयाः वृक्षाः हरितवर्णेन शोभन्ते । पर्णानि हरितवर्णीयानि भवन्ति । प्रतिवृन्तं पञ्च, सप्त, नव वा पर्णानि भवन्ति । तानि विशालानि, अण्डाकारकाणि, तीक्ष्णाग्राणि च भवन्ति । कीटेभ्यः कपाटिकादीनां रक्षणार्थम् एतस्य शुष्कपर्णानि उपयुज्यन्ते ।

एतस्य पुष्पाणि श्वेतवर्णीयानि, पाटलरेखायुक्तानि च भवन्ति । एते वृक्षाः एप्रिल्-जून्मासयोः पुष्पिताः भवन्ति । तत्काले वृक्षाणाम् अधः प्रातःकाले पुष्पशय्या एव प्रसारिता इव दृश्यते । एतस्य फलानि काष्ठम् इव दृढानि उभयत्र अपि तीक्ष्णाग्राणि च भवन्ति ।

छायानिमित्तम् एते वृक्षाः मार्गम् उभयतः वर्ध्यन्ते प्रायः ।



# अकृतव्रणः

परशुरामस्य बहवः शिष्याः आसन् । तेषु सदा गुरुसेवायां निमग्नेषु उत्तमशिष्येषु अन्यतमः आसीत् अकृतव्रणः ।

परशुरामः कदाचित् अरण्यमार्गेण कुत्रापि गच्छन् आसीत् । तत्काले कस्याश्चित् गुहातः दैन्यतापूर्णः आक्रन्दनस्वरः श्रुतः । परशुरामः तत्र गत्वा दृष्टवान् । तत्र कश्चन मुनिकुमारः भीत्या कम्पमानः आसीत् । कश्चन व्याघ्रः तस्य उपरि आक्रमणं कर्तुं सन्नद्धः आसीत् । तदा विद्युद्वेगेन परशुरामेण प्रयुक्तेन बाणेन सः व्याघ्रः भूमौ पतितः सन् प्राणैः वियुक्तः अभवत् ।

अपरक्षणे एव व्याघ्रशरीरात् कश्चन गन्धर्वः प्रत्यक्षीभूय 'शापविमोचनं कृतवते भवते कृतज्ञताः समर्प्यन्ते मया' इति उक्त्वा ततः अदृश्यतां गतः । मुनिकुमारः परशुरामं साष्टाङ्गं नमस्कृतवान् । परशुरामस्य अनुग्रहतः व्याघ्रकर्तृकात् व्रणात् सः रक्षितः इत्यतः तस्य नाम 'अकृतव्रणः' इति जातम् । परशुरामः तम् आशिषा अनुगृह्य शिष्यत्वेन स्वीकृत्य वेदोपनिषत्-पुराण-शास्त्रदीनि बोधितवान् ।

कुरुवीरः भीष्मः अपि परशुरामात् एव विद्यां गृहीतवान् आसीत् । कदाचित् काशिराजेन आयोजिते स्वयंवरे उपस्थाय राजकुमारान् पराजित्य अनुजस्य विचित्रवीर्यस्य निमित्तं काशिराजकुमारीः अम्बाम्, अम्बिकाम्, अम्बालिकां च स्वराज्यं प्रति आनीतवान् भीष्मः । यदा अम्बा - 'अहं साल्वराजे अनुरक्ता अस्मि' इति उक्तवती तदा तां साल्वसमीपं प्रेषितवान् सः । साल्वेन तिरस्कृता अम्बा विचित्रवीर्यं प्रार्थितवती - 'भवान् एव मां परिणयतु' इति । किन्तु विचित्रवीर्यः तां परिणेतुं न इष्टवान् । ततः सा भीष्मं प्रार्थितवती - 'एतस्य सर्वस्य कारणं भवान् एव मां परिणयतु' इति । किन्तु भीष्मः ब्रह्मचारिव्रतभङ्गं कर्तुम् अनिच्छन् तस्याः अपेक्षां तिरस्कृतवान् ।

एतेन क्रुद्धा सा भीष्मविषये प्रतीकारं साधयितुम् इच्छन्ती बहून् राजकुमारान् साहाय्यं प्रार्थितवती । किन्तु कोऽपि भीष्मविरोधं सम्पादयितुं न इष्टवान् । अन्ते अम्बा परशुरामसमीपं गत्वा स्वकथां निवेदितवती । परशुरामः शिष्यस्य भीष्मस्य समीपम् आगत्य आज्ञास्वरेण उक्तवान् - ''भवता अम्बा परिणेतव्या'' इति । किन्तु यदा भीष्मः एतत् निराकृतवान् तदा तयोः युद्धम् आरब्धम् ।

अकृतव्रणः परशुरामस्य सारथ्यं निरूढवान् । कुरुक्षेत्रे परशुराम-भीष्मयोः युद्धं दीर्घकालं यावत् प्रवृत्तम् । युद्धे कस्यापि जयः न जातः । अन्ते नारदादयः मुनयः, देवताः च तत्र आगत्य युद्धं स्थगितवन्तः । जयापजयनिर्णयं विनैव युद्धं स्थगितम् अभवत् ।

गुरोः आशीर्वादं प्राप्तवान् अकृतव्रणः अग्रे श्रेष्ठऋषित्वेन ख्यातिं गतः ।



# भवन्तः जानन्ति वा ?

१. मृतसमुद्रस्य (डेड्सी) गभीरता कियती ?
२. ओलम्पिक्ध्वजे विभिन्नवर्णीयाः सप्त वलयाः सन्ति । ते वर्णाः के ? किमर्थं च ते चिताः ?
३. वृक्षस्य वर्धनं निष्कृष्टतया ज्ञातुं साधनम् अन्विष्टवतः भारतीयस्य नाम किम् ?
४. १९०६तमे वर्षे नोबेल्पारितोषिकं प्राप्तवान् सः विज्ञानी कः, यस्य च अष्ट शिष्याः अपि अनन्तरकाले नोबेल्पारितोषिकं प्राप्तवन्तः ?
५. पत्युः अन्धतां मनसि निधाय वस्त्रपट्टिकया स्वनेत्रे आवृतवती राज्ञी का ? तस्याः पत्युः नाम च किम् ?
६. 'देशबन्धुः' इति, 'दीनबन्धुः' इति च बिरुदौ काभ्यां प्राप्तौ ?
७. उलूकम् अनिष्टकारकं मन्वानाः रोमन्जनाः पिपीलिकां कीदृशं भावयन्ति स्म ?
८. भारतस्य राष्ट्रियध्वजस्य त्रयः वर्णाः मेडम्कामावर्यया सूचिताः आसन् । एवं तर्हि अमेरिकाध्वजं रूपितवती महिला का ?
९. राष्ट्रियमृगत्वेन व्याघ्रः अस्मद्देशे कदा चितः ?
१०. डयमानाः स्थालिकाः ऐदम्प्राथम्येन कदा दृष्टाः ?
११. वैद्यकीयेतरक्षेत्रे कार्यं कृत्वा ख्यातिं गता इटलीदेशीया सर्वप्रथमा वैद्या का ?
१२. कस्मिन् कारागारे वसन् जवहरलालनेहरूवर्यः 'भारतदर्शन'(डिस्कवरी आफ् इण्डिया) नामकं ग्रन्थं रचितवान् ?
१३. मावो त्से तुङ्गवर्यः चीनादेशं 'पीपल्स् रिपब्लिक् आफ् चैना' इति कदा उद्घोषितवान् ?
१४. 'स्वर्गमन्दिरम्' (टेम्पल् आफ् हेवन्स्) कुत्र अस्ति ?
१५. अकबरचक्रवर्तिनः राजस्वविभागीयमन्त्री कः आसीत् ?

## उत्तराणि

१. ३९५ मीटर्परिमिता ।
२. नीलः, पीतः, हरितः, रक्तः, श्वेतः च । एतेषु अन्यतमः वर्णः प्रपञ्चस्थानां देशानां ध्वजे भवत्येव इत्यतः ।
३. जगदीशचन्द्रबोस् इति ।
४. जे.जे.थाम्सन्वर्यः ।
५. गान्धारी । धृतराष्ट्रः ।
६. देशबन्धुः - सि.आर्.दास् । दीनबन्धुः- सि.एल्. अण्ड्रूस् ।
७. सौभाग्यसूचकत्वेन ।
८. फिलिडेल्फियाप्रदेशीया बेट्सीरास्-वर्या ।
९. १९७२तमे वर्षे नवम्बर्मासे ।
१०. १९४७तमे वर्षे जून्मासे २४तमे दिनाङ्के ।
११. मेरिया माण्टेस्सरी । विद्याक्षेत्रे ख्याता सा ।
१२. अहमदनगरदुर्गे ।
१३. १९४१तमे वर्षे सप्टम्बर्मासस्य २१तमे दिनाङ्के ।
१४. चीनादेशे बीजिङ्गनगरे ।
१५. तोडरमल्नामकः ।

# सवर्णसमयप्रश्नावल्याः (२) - उत्तराणि



१. अङ्कोर् इति । अङ्कोरनगरं विजयवर्मवंशीयाः निर्मितवन्तः आसन् । ३०० वर्षाणि यावत् एतत् नगरम् उच्छ्रायस्थितौ आसीत् । गच्छता कालेन जनविहीनं तत् वृक्षादीनां वर्धनेन अरण्यमयं जातम् । ५०० वर्षाणाम् अनन्तरं हेन्री मौहाट्वर्यस्य प्रयत्नतः तस्य स्थितिः जनैः ज्ञाता । तत्र प्राप्तः शिलाविग्रहः गरुडस्य ।

२. इदानीं कुत्रापि न दृश्यन्ते, यतः २०० वर्षेभ्यः पूर्वम् एव एतेषां कुलं विनाशं गतम् अस्ति ।

३.



अत्र तासां विषमसङ्ख्यानां प्रतिबिम्बं प्रदर्शितं, याश्च प्रथमसङ्ख्यातः आरभ्यन्ते ।

४. 'तमाशा' इति । महाराष्ट्रराज्ये एतत् गेयनृत्यं प्राचुर्येण दृश्यते ।

५. मीनं लक्ष्यीकृत्य । अण्डमान्द्वीपवासिनः वन्यजनाः बाणप्रयोगेण एव मीनान् सङ्गृह्णन्ति ।

६. घण्टानन्तरम् अपि विग्रहः यथापूर्वं जलस्तरात् उपरि एव भवति । यतः यथा यथा जलस्तरः वर्धते तथा तथा नौका अपि उपरि सरति एव खलु ?





# रामस्य पाकः

रामापुरग्रामे शिवराजः नाम कश्चन पाचकः धनिकानां गृहेषु विवाह-समारम्भेषु च पाकं कुर्वन् जीवनं यापयति स्म । तस्य एका पुत्री । तस्याः नाम सीता इति । पञ्चमे वयसि एव सा मातृवियोगं प्राप्तवती । शिवराजः यदा पाककार्यार्थं गच्छति स्म, तदा सः आत्मना सह पुत्रीम् अपि नयति स्म । तत्र यदा सः पाकं कुर्वन् भवति स्म तदा सीता तूष्णीम् उपविश्य पश्यति स्म । उभौ अपि तत्रैव भोजनं कृत्वा, रात्रिनिमित्तं पाकं ततः एव आनयतः स्म । कुत्राऽपि पाककार्यं नास्ति चेत् शिवराजः प्रीत्या पुत्र्यै पाकं कृत्वा परिवेषयति स्म । गच्छता कालेन सीता प्रौढा जाता । परन्तु सा पाककरणविषये सर्वथा अनासक्ता एव जाता ।

अथ कदाचित् रामनामकस्य अन्य-पाचकस्य, शिवराजस्य च मैत्री जाता । यथा शिवराजस्य सीता अद्वितीया पुत्री, तथैव शिवराजस्य अनुजायाः रामः नाम अद्वितीयः पुत्रः आसीत् । एतस्य माता निर्धना आसीत् । अतः शिवराजः स्वगृहे एव रामाय आश्रयं दत्त्वा आत्मना सह पाककार्यार्थं नयति स्म । अल्पे काले एव रामः अपि उत्तमः पाचकः अभवत् । ततः सः शिवराजस्य पाककार्यभारं सर्वं स्वयं निर्वहन् शिवराजाय विरामं कल्पयितुम् उद्युक्तः अभवत् ।

रामस्य आत्मीयतां दृष्ट्वा सन्तुष्टः शिवराजः एकस्मिन् दिने तेन सह वार्तालापं कुर्वन् - ''वत्स राम ! सीता भवते दातव्या इति चिन्तितवान् अस्मि । अतः भवतोः विवाहं निर्वर्त्य निश्चिन्तः भविष्यामि'' इति उक्तवान् ।

सुन्दरीं सीतां रामः पूर्वमेव इष्टवान् आसीत् । यदा शिवराजः पृष्टवान् तदा रामः विनयेन - ''यथा भवतः इच्छा'' इति उक्तवान् ।

मासद्वयाभ्यन्तरे एव सीता-रामयोः विवाहः अभवत् । ततः वर्षाभ्यन्तरे



शिवराजः रोगग्रस्तः सन् शय्याम् आश्रितवान् । पुनः अल्पे एव काले प्राणान् अत्यजत् च । तदारभ्य रामस्य कार्यभारः अधिकः जातः । पितृवियोगतप्तायाः पत्न्याः सान्त्वनं पाककार्यं चापि तेनैव करणीयम् आपतितम् ।

भोजनप्रिया सीता कदाचित् स्थालिकायाः पुरतः उपविश्य - ''एतत् वृन्ताकस्य व्यञ्जनं सम्यक् नास्ति । उपसेचनं सामान्यम् अस्ति । अत्र तिन्त्रिण्याः रसः योजितः । यदि अत्र निम्बुकरसः योजितः स्यात् तर्हि वरम् अभविष्यत्'' इत्येवं विविधविमर्शं करोति स्म । कृतं पाकं सम्यक् भुक्त्वा अनावश्यकतया विमर्शं कुर्वतीं पत्नीं पश्यतः रामस्य कोपः आगच्छति स्म ।

केषाञ्चित् दिनानाम् अनन्तरं रामस्य जन्मदिनम् आगतम् । तस्मिन् दिने अपक्वस्य आम्रफलस्य उपसेचनं, शष्कुली च कारणीया इति चिन्तितवान् आसीत् रामः । परन्तु तस्मिन् दिने सीता उत्थान-समये एव - ''मम महती शिरोवेदना'' इति वदन्ती गृहकार्ये अनासक्तिं प्रदर्शितवती ।

'अस्यां स्थितौ एषा न पीडनीया' इति चिन्तयित्वा - ''कथञ्चित् प्रतिदिनं पाककार्यं मया क्रियते एव । अद्यापि मम यत् इष्टं तत् अहमेव करोमि'' इति निर्णीय रामः तस्मिन् अपि दिने स्वयमेव पाकं कृतवान् ।

भोजनार्थम् उपविष्टवती सीता आकण्ठं भोजनं कुर्वती एव - ''अहो ! एतयोः निर्माणे नैपुण्यम् एव न अवलम्बितम् । उपसेचने आम्लता अधिका अस्ति । शष्कुल्याः पिष्टस्य पेषणं सम्यक् न कृतम् एव । एतत् सम्यक् नास्ति । तत् सम्यक् नास्ति'' इति वदन्ती आसीत् ।

कृतं सम्यक् खादनीयम् इति उपविष्टः रामः पत्न्याः वचनं श्रुत्वा नितरां कुपितः अभवत् । तत्क्षणे एव सः आसनात् उत्थाय - ''अये मूर्खे ! एतावन्ति दिनानि अहं भवत्याः पीडां सोढवान् । भवत्याः निमित्तं पाककरणस्य अपेक्षया अरण्ये पिशाचानां कृते पाककरणं वरम् । इदानीमेव गच्छामि । भवती अमृतान्नं कृत्वा वा खादतु, बुभुक्षया मृता वा भवतु । तेन न कापि चिन्ता मम । स्वस्य अविवेकितायाः फलम् अनुभवतु'' इति वदन् तत्रैव विद्यमानं युतकं धृत्वा ततः निर्गतवान् ।

कदाऽपि सीतया रामस्य कोपः न दृष्टः आसीत् । किङ्कर्तव्यताविमूढा सा

क्षणकालानन्तरं यदा पतिम् अन्विष्टवती ततः पूर्वम् एव रामः अदृश्यः जातः आसीत् । निस्सहायिका सीता रोदनं कुर्वती शयनं कृतवती ।

कोपेन गृहात् निर्गतः रामः अल्पकालाभ्यन्तरे एव महत् अरण्यं प्राप्तवान् । अरण्ये गमनसमये सः कश्चन शब्दं श्रुतवान् ।

'एषः वानराणां ध्वनिः स्यात्' इति चिन्तयन् सः पृष्ठतः परिवृत्य दृष्टवान् । पृष्ठभागे द्वौ पिशाचौ आस्ताम् । तौ - ''काकतालीयन्यायेन आवयोः कृते पाकं कर्तुम् आगतस्य भवतः स्वागतम्'' इति उक्तवन्तौ ।

धैर्यवान् रामः पिशाचौ दृष्ट्वा - ''भवतोः कृते मया अत्र आगतम् इति केन उक्तम् ? अहं पाचकः इति भवद्भ्यां कथं ज्ञातम् ?'' इति पृष्टवान् ।

एतस्य प्रश्नं श्रुत्वा पिशाचौ हसन्तौ - ''तदेव अस्माकं रहस्यम् अस्ति । अद्य अर्धरात्रे आवयोः स्वामिनः पुत्र्याः विवाहः वैभवेन भविष्यति । अतः भवता अनेकविधः पाकः सज्जीकरणीयः अस्ति । पिशाचाः वयं पाकं कर्तुं न जानीमः । 'पाचकद्वारा पाकः कारणीयः' इति वयं चिन्तितवन्तः आस्म । तावता भवान् अत्र आगतः । इदानीं भवान् आवाभ्यां सह आगच्छति चेत् भवन्तम् आवाम् स्वामिसमीपं नयावः'' इति उक्तवन्तौ ।

अनन्तरं पिशाचौ तं वृक्षसमूहस्य समीपे स्थितस्य पिशाचनायकस्य समीपं नीतवन्तौ । पिशाचयोः मुखात् सर्वं श्रुत्वा सः पिशाचनायकः - ''भोः पाचक !



अस्मिन् विवाहे समग्रस्य पाकस्य दायित्वं भवतः एव । भवान् सम्यक् रुचिकरं पाकं करोति चेत् वयं यथेष्टं पारितोषिकं दद्मः'' इति उक्तवान् ।

तदा रामः गर्वेण - ''पारितोषिक-दानप्रस्तावः अनन्तरं भवतु । प्रथमं पाकं निर्मातुं पात्राणि वस्तूनि च कुत्र सन्ति इति वदन्तु'' इति उक्तवान् ।

तस्य गर्वं दृष्ट्वा पिशाचनायकः कोपेन - ''पात्राणां वस्तूनां वा न्यूनता अत्र नास्ति एव । परन्तु भोजनार्थं लड्डुकः अपूपः च करणीयः । पिशाचानां पाकं भवान् न जानाति खलु ? शृणोतु ! चणकदालेन अपूपः करणीयः । लड्डुकः अपि सम्यक् करणीयः । यदि पाकः सम्यक् न भविष्यति तर्हि भवन्तं कर्तयित्वा खण्डशः कृत्वा अस्माकं प्रतिवेशिनां पिशाचानां कृते उपायनत्वेन प्रेषयिष्यामि'' इति उक्तवान् ।



पिशाचानां वाक्यं श्रुत्वा रामः यद्यपि भीतः, तथाऽपि गत्यन्तरस्य अभावात् सः पाककार्ये उद्युक्तः अभवत् । चणकदालस्य अपूपं लड्डुकं च सज्जीकृत्य विश्रान्त्यर्थं सः ततः किञ्चिद्दूरे स्थितस्य वृक्षस्य अधः उपविष्टवान् ।

पिशाचानां कोलाहलः आरब्धः । तत् श्रुत्वा रामस्य शरीरं कम्पते स्म । कुतश्चित् पिशाचानां गणः एव आगतः । तेषां कोलाहलात् रामस्य निद्रा एव न आगता ।

वरः पिशाचः अपूपं खादन् - "लड्डुकः अपूपः च बहु उत्तमः अस्ति । एतत्सर्वं कः कृतवान् ?" इति पृष्टवान् ।

तदा नायकपिशाचः - "विवाहार्थम् एकं पाचकम् आनाय्य पाकं कारितवन्तः वयम्" इति उक्तवान् ।

तस्मात् उत्तरात् आश्चर्यचकितः वरः - "तर्हि तं पाचकं भवतः पुत्र्या सह उपायनत्वेन मम गृहं प्रति प्रेषयतु । एषा मम अपेक्षा" इति उक्तवान् ।

एतत् श्रुत्वा नायकपिशाचः सन्तोषेण - "भवतः अपेक्षाम् अवश्यं पूरयिष्यामि" इति उक्त्वा समीपस्थं पिशाचम् उद्दिश्य - "रामम् अत्र आनयतु" इति आज्ञापितवान् ।

तत्र प्रवर्तमानं सम्भाषणं सर्वं शृण्वन् स्थितः रामः कम्पमानः सन् - 'अग्रे किं करणीयम् ?' इति चिन्तयन् आसीत् । तस्मिन् समये एव आञ्जनेयदेवालयस्य अर्चकेन उक्तः मन्त्रः तेन स्मृतः । परन्तु रामः मन्त्रे "आञ्जनेय" इत्येकं शब्दं विहाय अन्यत् किमपि न स्मरति स्म । तथाऽपि समीपम् आगतान् पिशाचान् दृष्ट्वा नेत्रे निमील्य आञ्जनेयस्य स्तुतिं कुर्वन् उपविष्टवान् सः ।

एवं पञ्चनिमेषपर्यन्तं स्तुतिं कृतवान् रामः । तावता तत्र सर्वत्र निश्शब्दता प्रसृता अभवत् । एतत् जानन् रामः नेत्रे उद्घाटितवान् । समीपे कुत्राऽपि पिशाचाः न दृष्टाः । तस्मिन् समये एव सूर्योदयः जातः आसीत् । सन्तोषेण आञ्जनेयं स्मृत्वा गृहं प्रति प्रस्थितवान् रामः ।

अरण्यम् अतिक्रम्य विशालप्रदेशं आगतः रामः शिरः अवनमय्य आगच्छन्तीं पत्नीं सीतां दूरात् दृष्टवान् । आश्चर्यम् अनुभवन् सः - "अये, कुत्र प्रयाणम् ?" इति दूरात् एव तां पृष्टवान् ।

पत्युः ध्वनिं श्रुत्वा सीता अश्रूणि स्त्रावयन्ती आश्चर्येण आनन्देन च रामस्य समीपम् आगतवती ।

पत्न्याः सान्त्वनं कुर्वन् रामः - "सीते !

अहम् आगतवान् अस्मि । पुनः रोदनं किमर्थम् ? प्रातःकाले एव एवम् अरण्यं प्रति किमर्थं प्रस्थितवती भवती ?'' इति पृष्टवान् ।

''भवतः कृते एव अहं प्रस्थितवती । मम कृते पाककरणात् जुगुप्सितः भवान् 'पिशाचानां कृते पाककरणम् एव वरम्' इति उक्त्वा कोपेन गृहात् निर्गतवान् । अतः भवान् अत्रैव कुत्रापि स्यात् इति विचिन्त्य भवन्तम् अन्विष्यन्ती अहम् अत्र आगतवती'' इति अश्रूणि मार्जयन्ती उक्तवती सीता ।

तदा रामः - ''सत्यं भद्रे ! मया यथा उक्तं तथैव अभवत् । अरण्यस्थाः पिशाचाः कथमपि मां पाचकं ज्ञात्वा बलात् पाके नियोजितवन्तः । ते पिशाचाः कदा कथं व्यवहरन्ति इत्येव न ज्ञायते । सः पिशाचनायकः तु वरेण सह मां कुत्रापि प्रेषयितुम् एव सिद्धः आसीत् । आञ्जनेयस्य अनुग्रहात् अहं कथमपि रक्षितः अभवम् । इदानीं मया विवेकः प्राप्तः अस्ति । कोपस्य कीदृशं फलम् इति ज्ञातम् अस्ति । बुद्धिहीनानां पिशाचानां कृते पाककरणस्य अपेक्षया भवत्याः निमित्तं पाककरणम् एव वरम् इति अहम् इदानीं ज्ञातवान् अस्मि । अतः इतः परं भवत्याः अपेक्षायाः अनुगुणम् एव पाकं करिष्यामि'' इति उक्तवान् ।

सीता तत्क्षणे एव तस्य हस्तं गृहीत्वा - ''इतः परं तादृशी आवश्यकता न भविष्यति एव । इदानीं मया विवेकः प्राप्तः अस्ति । अतः अहम् इतः परं सर्वदा अपि भवदनुकूला एव स्थास्यामि । अन्यत्र पाककार्यं यदा न भविष्यति तदा अहमेव भवतः कृते गृहे पाकं करिष्यामि । कार्यसमये अहमपि भवता सह आगत्य साहाय्यं चापि करिष्यामि'' इति उक्तवती ।

पत्न्याः वचनेन नितरां सन्तुष्टः रामः ग्रामगमनसमये पत्नीम् उद्दिश्य पिशाचानां कथां समग्राम् उक्तवान् । सर्वं श्रुत्वा सीता भीत्या - ''दैवानुग्रहेण अमङ्गलं किमपि न प्रवृत्तम् । यदि किमपि अमङ्गलं प्रवृत्तम् अभविष्यत् तर्हि मम जीवनम् अन्धकारमयम् अभविष्यत्'' इति उक्त्वा अपायं दूरीकृतवन्तं भगवन्तं मनसा नमस्कृतवती ।



# भीमसेनस्य बुद्धिमत्ता

अमृतपुरतः रामपुरं प्रति अरण्यमार्गेण गच्छतः भीमसेनस्य भीतिः यत् मध्येमार्गं चोराः मां पीडयेयुः इति । अतः सः मुसलसदृशं दण्डं गृहीत्वा प्रयाणम् आरब्धवान् । अरण्यस्य मध्यभागे चत्वारः चोराः तस्य उपरि आक्रमणं कृतवन्तः । भीमसेनः धैर्येण तान् सम्मुखीकृतवान् । एतस्मिन् युद्धे भीमसेनः यथा, तथा चोराः अपि व्रणिताः । अन्ते चोराः भीमसेनस्य बन्धने समर्थाः जाताः । ते तं वृक्षे बद्ध्वा तस्य कोषे हस्तं प्रसार्य धनम् अन्विष्टवन्तः । तत्र तैः दश रूप्यकाणि प्राप्तानि ।

एतत् दृष्ट्वा चोरनायकः खेदेन उक्तवान् - ''मुसलाकारकं दण्डं गृहीत्वा गच्छतः भवतः समीपे प्रभूतं धनं स्यात् इति वयं चिन्तितवन्तः आस्म । भवत्समीपे दशरूप्यकमात्रम् एव धनम् अस्ति इति यदि वयं जानीयाम तर्हि एतावत् कष्टम् अनुभूतवन्तः न स्याम एव । ततः दण्डप्रहारादिकम् अपि अस्माकं न अभविष्यत्'' इति ।

तदा प्रहारकारणतः वेदनाम् अनुभवन् भीमः उक्तवान् - ''चोराः बुद्धिमन्तः भवन्ति, ते जनानां सर्वेषु अङ्गेषु शोधनं कुर्वन्ति इति अहं चिन्तितवान् आसम् । धिक् भवतां मन्दबुद्धित्वम् ! भवन्तः मम कोषमात्रे धनस्य अन्वेषणं कुर्वन्ति, उष्णीषादीनां मध्ये अन्वेषणं न कुर्वन्ति इति यदि अहं जानीयां तर्हि भवतां विरोधं न अकरिष्यम् एव । ततः अहम् अपि भवतां प्रहारतः रक्षितः अभविष्यम्'' इति ।

एतत् श्रुत्वा चोराः भीमसेनस्य उष्णीषे गोपितं रजत-सुवर्णनाणकानि वशीकृत्य ततः





# उपकारफलम्

वसन्तपुरनामके ग्रामे कान्तिवर्मा नाम कश्चन महाधनिकः आसीत् । तस्य सम्पत्तिः कियती अस्ति इति ग्रामे स्पष्टतया कोऽपि न जानाति स्म । तस्य गृहे अनेके सेवकाः आसन् । सर्वविधसुखसम्पत्तिः अपि आसीत् । तस्य पत्नी अनुकूला सुन्दरी चापि आसीत् ।

किन्तु दौर्भाग्यं नाम तयोः दम्पत्योः अपत्यं न आसीत् । कान्तिवर्मणः पत्नी अपत्यस्य प्राप्त्यर्थम् अनेकविधानि व्रतानि आचरितवती आसीत्, बहुविधपूजाः च कृतवती आसीत् । उपवासादिकम् अपि श्रद्धया आचरितवती आसीत् । तथापि अपत्यं तु न जातम् आसीत् । एतस्य सर्वस्य कारणतः कान्तिवर्मा नितरां खिन्नः आसीत् ।

कदाचित् तं ग्रामं प्रति कश्चित् संन्यासी आगतवान् । सः सर्वत्र भ्रमणं कुर्वन् त्रीणि दिनानि एकत्र तिष्ठति स्म । तेन यत् दीयते स्म तत् भक्तानाम् अपेक्षायाः पूरणे समर्थं भवति स्म । अतः सर्वे अहमहमिकया तत्समीपम् आगत्य विविधाः अपेक्षाः प्रकटयन्ति स्म ।

कान्तिवर्मा अपि तस्य संन्यासिनः समीपं गत्वा साष्टाङ्गं नमस्कृत्य स्वचिन्ताविषयम् उक्तवान् । तस्मिन् समये एव संन्यासी क्षीरं पिबन् आसीत् ।

तस्य क्षीरस्य स्वल्पं भागं कान्तिवर्मणे दत्त्वा - ''एतत् क्षीरं समग्रं भवतः पत्न्या सकृत् एव पातव्यम् । तदा भवतः इच्छा पूर्णा भविष्यति'' इति उक्तवान् संन्यासी ।

कान्तिवर्मा तद् क्षीरं स्वीकृत्य पत्न्यै दत्त्वा उक्तवान् - ''एतत् क्षीरं सकृत् एव पिबतु भवती'' इति ।

कान्तिवर्मणः पत्नी तद् क्षीरं स्वीकृत्य देवाय नैवेद्यरूपेण समर्प्य तीर्थम् इव क्षीरं हस्तेन स्वीकृत्य द्विवारं पीतवती । एतस्य परिणामतः अचिरात् एव सा गर्भवती जाता ।

नव मासाः अतीताः । अनन्तरं सा

''पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा''



पुत्रीद्वयं प्रसूतवती । पुत्रीद्वयम् अपि सुन्दरम् आसीत् । परन्तु तयोः द्वयोः अपि एकैकः पादः नितरां बलहीनः आसीत् । अतः ताभ्यां द्वाभ्याम् अपि चलितुं न शक्यम् आसीत् ।

कान्तिवर्मा तयोः पुत्र्योः चिकित्सायाः निमित्तं बहु धनं व्ययीकृतवान् । परन्तु तेन किमपि प्रयोजनं न जातम् । यद्यपि तयोः उभयोः अपूर्वं सौन्दर्यम् आसीत्, तथापि अङ्गवैकल्यकारणतः तयोः बहु सङ्कोचः भवति स्म । तथापि कान्तिवर्मा प्रीत्या ते पालयति स्म ।

द्वादशवर्षाणाम् अनन्तरं पुनः सः एव संन्यासी तं ग्रामम् आगतवान् । तदा कान्तिवर्मा तस्य संन्यासिनः समीपं गत्वा तं साष्टाङ्गं नमस्कृत्य स्वकष्टं विस्तरेण निवेदितवान् ।

संन्यासी क्षणं यावत् नेत्रे निमील्य - ''यथा अहं सूचितवान् तथा न कृतवती भवतः पत्नी । अतः एतादृशी समस्या आगता । इदानीं मम समीपे एतत् कदलीफलम् अस्ति'' इति वदन् कदलीफलं किञ्चित् खादित्वा अवशिष्टं भागं कान्तिवर्मणे दत्तवान् । ''यस्यां पुत्र्यां भवतः विशेषानुरागः अस्ति तस्यै एतत् फलं ददातु'' इति उक्त्वा कान्तिवर्माणं ततः प्रेषितवान् च ।

कान्तिवर्मणा किं करणीयम् इति न ज्ञातम् । एतत् फलं कस्यै पुत्र्यै दातव्यम् इति सः निश्चेतुं न शक्तवान् । 'यद्यपि द्वयोः पुत्र्योः अपि अङ्गवैकल्यम् अस्ति, तथापि संन्यासिना किमर्थम् एकस्यै एव फलं दत्तम् ? एतेन प्रसादेन एकस्याः एव अङ्गवैकल्यम् अपगतं भवति चेत् अपरस्याः दुःखं खलु ? एका एव पुत्री अङ्गविकलता-रहिता भवति, अन्या च पुत्री यथापूर्वम् एव तिष्ठति चेत् मम अपि दुःखं भवति किल ?' इत्येवं चिन्तयन् कान्तिवर्मा मार्गे गच्छन् आसीत् । तदा सः कस्याश्चित् रोदनध्वनिं श्रुतवान् । दूरे काचित् युवतिः एकस्य कूपस्य समीपे उपविश्य उच्चस्वरेण सगद्गदं रुदती आसीत् । तत्रैव स्थित्वा कश्चित् युवकः तस्याः सान्त्वनं कुर्वन् आसीत् ।

यदा कान्तिवर्मा तयोः समीपं गतवान् तदा सः युवकः तं प्रार्थितवान् - ''स्वामिन् ! भवान् वा एतां हितवचनानि वदतु । एषा कूपे पतामि इति वदन्ती अस्ति'' इति ।

''किमर्थम् एषा कूपे पतितुम् इच्छति ?'' इति कान्तिवर्मा कुतूहलेन तं

युवकं पृष्टवान् ।

"एषा युवतिः बाल्ये एव पार्श्ववायु-पीडिता आसीत् । अतः एषा चलितुं न शक्नोति स्म । एतां परिणेतुं कोऽपि न इष्टवान् । अतः अहम् एव दयया एतां परिणीतवान् । अहं प्रतिदिनं एतस्याः आवश्यकम् उपचारं कृत्वा कार्यार्थं बहिः गच्छामि स्म । किञ्चित्कालं यावत् एवमेव प्राचलत् । किन्तु एषा पत्युः मम कष्टं सोढुं न शक्नोति स्म । 'मम कार्यं सर्वं पतिः एव करोति । अतः मम जीवनेन किमपि प्रयोजनं नास्ति' इति विचिन्त्य एषा आत्महत्यां कर्तुम् उद्युक्ता अस्ति । एतस्मात् अन्यां कामपि परिणयेयम् इति एतस्याः चिन्तनम् अस्ति । एताम् अहं स्वेच्छया एव परिणीतवान् अस्मि । एतस्यां मम विशेषानुरागः अस्ति । यदि एषा मृता भविष्यति तर्हि अहम् अपि मृतः भविष्यामि इत्यत्र नास्त्येव सन्देहः । भवान् वा एतां किञ्चित् बोधयतु" इति उक्तवान् सः युवकः ।

तदा कान्तिवर्मा संन्यासिना दत्तं फलं ताभ्यां दत्त्वा तयोः कष्टं परिहर्तुम् इष्टवान् । तथा एव - "एतत् फलं भवती खादतु" इति वदन् तस्यै युवत्यै तत् फलं दत्तवान् च ।

सा युवतिः फलं यदा खादितवती तदा अनुक्षणम् एव तस्यां महत् परिवर्तनं जातम् । सा उत्थाय कान्तिवर्माणं नमस्कृतवती । तस्याः पत्युः तु अतीव आश्चर्यं जातम् ।

"भवतोः कष्टं परिहृतम् । भवद्भ्यां गृहं गन्तुं शक्यते" इति उक्त्वा कान्तिवर्मा तौ उभौ अपि प्रेषयित्वा गृहं प्रति प्रस्थितवान् ।

'मम कार्यं न संवृत्तम्' इति कान्तिवर्मणः दुःखं जातं चेदपि 'मम कारणतः एकस्य परिवारस्य कष्टं परिहृतम्' इति चिन्तयन् सः तृप्तिं प्राप्तवान् ।

यदा सः गृहं प्राप्तवान् तदा तस्य उभे अपि पुत्र्यौ धावन्त्यौ तस्य समीपम् आगत्य तम् आलिङ्गितवत्यौ । तदा 'स्वसन्तोषम् अपि तृणीकृत्य अहं यत् परोपकारार्थं प्रवृत्तः अभवं तस्य एव फलम् एतत्' इति चिन्तयन् कान्तिवर्मा वर्णनातीतम् आनन्दं प्राप्तवान् ।



# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां नवम्बर् - १९९६ मासे प्रकटयिष्यामः ।



S.G. Seshagiri



Mahantesh C. Morabad

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा सप्टम्बर् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

'जुलै'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - **आवयोः स्वावलम्बिता सदापि ।**

द्वितीयचित्रम् - **न आवयोः परमुखप्रेक्षिता कदापि ।**

प्रेषिका - कु. शिल्पा रमेश मुळे, ३०-८, सोमवारपेठ, सुन्दरनगरी बि-३२, पुणे-४११०११

# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते)- रू. ७२-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्स्, वडपळनी, मद्रास् - ६०० ०२६

Printed by B.V. REDDI at Prasad Process private Ltd., 188, N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

CHANDAMAMA (Sanskrit) September 1996 Regd. No. TN / MS (S) 302